ॐ परमात्मनेनमः । मृषा मायाशक्त्याऽऽवृतमहिमनि ब्रह्मणि परे जगज्जालं जातं स्फुरति वियतीवोरुनगरम् । विरंचिश्रीशेशत्रिदशन-
रतिर्यग्गतभिदा कुतोतीभूमाहं निरवधि सदानंदघनचित् ॥ १ ॥ काशते कलितं यस्य पदं वैदिकमस्तकैः । भक्तमुक्तौ समीहंतं तं नृसिंहं
गुरुं भजे ॥ २ ॥ गंभीरभावभारेण दुर्वहा गौरवीकृतिः । तथापि भेदधिक्कारसत्क्रियां श्रद्धयाऽऽरभे ॥३॥ यद्यपि श्रुतिस्मृतीतिहास पुराणा-
गमैः क्रियासमभिहारेण जगन्निदाने सर्वज्ञे परमात्मनि सजातीयादिसमस्तभेदो निंदितो निषिद्धश्च यद्यपि चात्र भगवद्भिर्बादरायण
भगवत्पादादिभिः पूर्वाचार्यैरारंभणाधिकरणादिन्यायेनापि भेदसत्तानिराकारि तथापि केचित् स्वोत्प्रेक्षापरिकल्पितपारिभाषिकयुक्तिक-
लापाऽऽकुलीकृतांतःकरणाः भेदसत्तां संभावयंतो न श्रुत्यादिसिद्धाऽद्वितीयचिदात्मनिग्रहं वध्नंति अतस्तन्मोहशांतये समस्तभे-

# ओं परमात्मनेनमः । वेदान्तवनसंचारिनीलाचलगुहाश्रयं ।
# ज्योतिर्विराजतेध्वस्त मायावरणवारणम् ॥ १ ॥

दटुर्निरूपत्वप्रकटनाय ग्रंथमारभमाणः तत्परिसमाप्त्यादिफलकमीश्वरतत्त्वानुस्मरणं मंगलं मनसाऽनुष्ठितं शिष्यशिक्षार्थं प्रकटयन् प्रकरण-
विषयादिकं च सूचयन् स्मृतवस्तुस्वरूपं सलक्षणप्रमाणं निर्दिशति । वेदांतेत्यादिना । ज्योतिः चित्प्रकाशः विराजते विविधनामरूपप्रपं-
चात्मना दीप्यते तेनाऽध्यस्तसमस्त प्रपंचात्मत्वापत्त्यातदधिष्ठानत्वं तत्तदवच्छिन्नस्फूर्तिमत्तयाच सर्वज्ञत्वमिति तटस्थलक्षणद्वयं सूचितं
ज्योतिः पदोपात्तस्य चित्प्रकाशस्य सदानंदात्मत्वेन श्रुतिन्यायाभ्यां निर्धारितत्वात्तेन सच्चिदानंदरूपत्वं स्वरूपलक्षणमुक्तम् ननु प्रपंचाधि-
ष्ठानचित्प्रकाशात्मत्वमात्रेण कथं ब्रह्मणः सर्वज्ञत्वं तदात्मत्वेऽपिजीवस्य तदभावादित्याशंक्यमायिनं तु महेश्वरं योनिं योनिमधितिष्ठत्येकः

विद्याविद्ये ईशते यस्तु सोऽन्यः मयाध्यक्षेण प्रकृतिः सूयते सचराचरं माया परेत्यभिमुखे च विलज्जमानेत्यादि श्रुतिस्मृतिभिरीश्वरस्य मायानियंतृत्वाऽवधारणात्तं प्रति तत्स्वरूपाऽऽवरणानुपपत्तेस्तस्यैव सर्वज्ञत्वं जीवस्य तु तत्प्रतिबिंबस्याऽनृतेन हि प्रत्यूढा अनीशया शोचति मुह्यमान इत्यादि वचनादविद्याऽऽवृतस्वरूपत्वादज्ञतैवेत्यभिप्रेतयाह । अध्वस्तेति । अध्वस्ताऽनादिकालमारभ्याऽखंडदंडायमानामाया मायाजीवपुरुषार्थाच्छादनेन तदनर्थहेतुभूता तत्कृताऽऽवरणस्य नितरां वारणं नित्यनिवृत्तिर्यस्मात्तत्तथा मायाया अर्थाच्छादनेनाऽनर्थोपस्थापकत्वमुक्तं श्रीभागवते "ऋतेऽर्थं यत्प्रतीयेत नप्रतीयेत चात्मनि तद्विद्यादात्मनो मायां यथाभासो यथातमः" इति ध्वस्तेति वा च्छेदः * मायां प्रत्याश्रय विषयत्वाऽनुपपत्तेस्तदाश्रयविषयभूतवस्त्वं तराऽनिरूपणाच्च तदपेक्षया मायानवस्तु सती॥ तदिदमाह ॥ ध्वस्तेति॥ नित्यनिरस्तसत्ताकेत्यर्थः यद्वा मायावरणमेव वारणोमत्तगजः दुर्वलानां भयादिविक्षेपहेतुत्वात् ध्वस्तः समूलमुन्मूलितः येन प्रत्यगात्मतया साक्षात्कृतेन तत्तथा जडापि चरमसाक्षात्कारात्मिका वृत्तिर्यद्वलमवष्टभ्यात्यंतनिरूढमप्याऽऽवरणं निवारयति तच्चिदात्मनि तस्य आवरणवारणस्य काऽसंभावनेति भावः एवं शास्त्रीयलक्षणलक्षितं विषयभूतं वस्तु सप्रयोजनं निर्दिश्य प्रकरणनिष्पत्तिस्थानं सूचयन् प्राकृत जनस्यापि सुवोधायलक्षणांतरमाह । नीलेति । नीलाचलेयागुहावततत्वाऽभिव्यक्तिहेतुत्वात् गुहापुरुषोत्तमसिंहासनस्थानं तत्रशेते निरतिशयैश्वर्यशालितयाऽभिव्यज्यते इतितथोक्तः तत्र प्राकृतानामपि प्रकाशमानज्योतिषएवेश्वरात्मत्वमुक्तं विष्णुपुराणे "ब्रह्माक्षरमजंनित्यं यथासौपुरुषो-

---

* स्वप्रकाशासंगचैतन्यस्य वस्तुतऋतेऽर्थंविनापि-वास्तवमर्थं-यद्-यतः किमप्यनिरुक्तं वस्तु आत्मन्यधिष्ठाने प्रतीयेत सदपि च न प्रतीयेत तत् आत्मनोमम मायां विद्यात् यथा आभासोद्विचंद्रादिरिति अर्थं विनाप्रतीतौदृष्टान्तः यथातम इतितु सतोऽप्रतीतौदृष्टान्त इति संक्षेपेण श्लोकार्थः ।

त्तमः। तथारागादयोदोषाः प्रयांतुप्रशमंममेति" उक्तलक्षणे ब्रह्मणिप्रमाणाकांक्षायामाह। वे दान्तेति। वे दांताएवाऽनभ्यासिनांदुरवगाहित्वा-
द्वनमिव वनम्। फलवचनाथ वादादिफलपुष्पादियुक्तनानाशाखाकांडवल्लीसमुदायत्वाद्वनमिववनम् वेदांतास्तदात्मत्वादुपनिषदांतत्वं त-
त्रसंचरणशीलं तदेकाऽवगमसमितियावत् अचवनपदेनोपनिषदांकात्स्न्यर्थपरेण तासांब्रह्मणि प्रामाण्यकारणं गतिसामान्यं सूचितम् उ-
क्तलक्षणे ब्रह्मणिप्रमाणांतराऽनिरूपणात् नावेदवित्मनुते तं बृहंतं नैषा तर्केणमतिरापनेया सर्वेवेदा यत्पदमामनंतितं त्वौपनिषदमित्यादि-
श्रुतेश्च सत्यंज्ञानमनंतं ब्रह्मयतोवा इमानि भूतानिजायंते सदेवसौम्येदमग्रआसीदेकमेवाऽद्वितीयं तदैक्षतबहुस्यां प्रजायेयेति यः सर्वज्ञः
सर्वविदित्यादिसमस्तवेदांता एवोक्त लक्षणे ब्रह्मणिप्रमाणमितिभावः अचवनशैलगुहादि कीर्तनात् सिंहाकृतिब्र ह्मखाभीष्टंद्योतितम्।१।
ननु समस्तभेदसत्त्वसाधनसमर्थेषु कणभुगादिमताऽनुवर्तिष्वभिनवतार्किकेषु जीवत्सुकथं वेदांतानांस्वारस्यमात्रेण प्रत्यगभिन्नाद्वय-
ब्रह्मणि प्रामाण्यं सिध्येदितिग्राशंक्य सर्वज्ञेनापिपरमेश्वरेण सांप्रतिजीवपरादिभेदसतत्त्वमशक्यं साधयितुमितिपरमेश्वरेण सह विवादव्या-
जेनवदन्नन्यान् प्रति तन्निराकृतिः सुकरेति सूचयन् भक्तिभावनस्रेण चेतसा पुनस्तमेवाऽनुसंधत्ते। किं नतु मित्यादिना। हे
नरहरे आस्तांतावदन्यदभेदसाधने मानं तवैवनाम निरुच्यमानं मदभेदं साधयतीत्याह। किंनत्वं नरसिंह इति। त्वं नरसिंह एव न किमिति
किमानर्जयं आक्षिप्यते तवनरसिंह नामधेयत्वस्य लोकवेदसिद्धत्वादभ्यर्हितकर्मधारयसमासात्मकनामनिर्वचनेन नृशब्दवाच्यस्य
मम सिंह शब्दार्थत्वेन श्रुतिसिद्धेन त्वया सहाऽभेद प्रतीतेः नावयोर्भेदः सन्निस्यर्थः ननु जीवस्य मदभेदेतवकिमायातमितग्रत आह
यद्विवेति। अहं मानकिमित्यनुषंगः मयिन्द्रशब्दवाच्यजीवत्वस्याऽनुभवसिद्धत्वान्नतदपलापः कर्तुं शक्य इत्यर्थः मनुत्वं जानेति न किंतु

प्रमात्वत्वकर्तृत्वभोक्तृत्वादिबंधयुक्तत्वात्तव नित्य मुक्तेन मया सह भेद एव नाऽभेद इति। शंकते नोचेदिति। उक्तविधयाऽभेदो न चेदित्य र्थः स्यादेतदेवं बंधो मयि यदि वास्तवः स्यात् स तु मुखप्रतिबिंबादिगतश्यामताव दौपाधिकभेद मुपजीव्यमस्ति कियंतं का लं व्यवस्थितः अधुना श्रुतिन्यायादिना परमेश्वरात्मना निश्चिते मयि कथं वास्तवबंधो घटेत अवास्तवेन च तेन कथमावयोः सत्यभेद सिद्धि रित्यभिप्रेत्याऽऽह। कथं बंधोमय्यखिलेश्वरेत्वयीति। त्वयि मयी ति सप्तम्यौ समानाधिकरणे किंच विभुत्वप्रसिद्धि रपि तव सर्वं भेदसत्ता मपवदति निरवयवस्याऽसंगस्य वस्तुनः केनापि संयोगादे रसंभवेन सर्वं समाप्नोषि ततोऽसि सर्वः अंत र्बहिश्च तत्सर्वं व्याप्य ना रायणः स्थितः "सर्वाऽऽननशिरोग्रीवः सर्वभूतगुहाशयः सर्वव्यापी स भगवान् तस्मात्सर्व गतः शिवः"। महान् प्रभु र्वैश्वरूप इत्यादि वचनसिद्धसर्वात्मत्व योग्यत्वस्यै व विभुत्वा दित्यभिप्रेत्य तत्त्वे न संबोधयति। विभो इति। ननु जीवाना मनेकत्वा देकेन मया कथं

किंनत्वं नरसिंह एव यदि वा नाहं न नो चेत्कथं बंधो मय्यखिलेश्वरे त्वयि विभो किंनास्ति मत्तः परः॥ भूयादर्थवदात्मबंधहर इत्याद्यं वचोऽपौरुषं नत्वं नातदहं त्वमेव नृहरे भूयासमात्मंस्त्वयि॥ २॥

तेषा मभेद इत्याशंक्याऽऽतद्भेदो प्यवास्तव इत्याह किंनास्तिमत्तइति म दन्यो नाजीवः कि मस्ति ना स्त्ये वे त्यर्थः एत दति रिक्तानि शरीराणि ममै व भोगसाधनानि शरीरत्वा देतच्छरीरवत् चैत्रमैत्रात्मानौ न वस्तुतः परस्परं भिद्येते उपाधिपरामर्शं वि ना भेदे नाऽविभाव्यमानत्वात् घटाद्याकाशव दित्यादि प्रयोगा द्विपक्षे कल्पना गौरवादिबाधक तर्कोपेतात् एको देवः सर्वभूतेषु गूढः "एक एव हि भूतात्मा भूते भूते व्यवस्थितः अविभक्तं च भूतेषु विभक्त मिव च स्थितमि"त्यादिवचना च्च जीवैकत्व सिद्धिः नचै वं

वाढं तु भोक्तृत्वव्यवस्थाया एकस्य सकलशरीरवर्तिसुखदुःखाद्यनुसंधानस्य चा नुपपत्तिः स्या दिति वाच्यं स्थूलसूक्ष्मशरीर द्वयभेदेनैव तदुपपत्तेः वक्ष्यमाणत्वा दिति भावः ननु त्वत्कृतनामनिर्वचनमात्र न्नावयो रभेदसाधकं तस्य पौरुषेयतया स्वार्थे मानां तरापेक्षणा न्निद हैतो र्बंधस्य सर्वं जनीनत्वा दबाधितत्वेन मिथ्यात्वायोगात् त्वदनुभवस्य वटयक्षानुभववद्वंधवैतथ्यासाधकत्वा- दित्याशंक्याऽऽह । भूयादर्थवदित्यादिना । स्वात्मबंधहर इत्ये तदाद्यं यस्य तदपौरुषं वचोर्थवद्भूयादित्यन्वयः । एष उएवनृ एष हि सर्वं- च सर्वदा सर्वात्मासिंहोऽसौ परमेश्वरोऽसौ हि सर्वदा सर्वात्मा सन् सर्वमत्ति नृसिंह एवं कालः उपद्रष्टानुमंते य आत्मा नृसिंहश्चि- द्रूप एवाविकारो ह्युपलब्धा सर्वं चे त्यादि कं बहुव्रीहिपदगृहीतं अयं भावः तापन्यां चतुर्थखंडे एषेत्यादि श्रुतिवाक्यम् पौरुषेयत- या निरस्तसमस्ताऽप्रामाण्यशंकं पौर्वापर्यन्यायेन मानांतरा त्प्रबलं पदार्थद्वयप्रदर्शनपूर्वकं समानाधिकरणपदद्वयाऽऽत्मकमहावा- क्याऽऽत्मकनामनिर्वचनेन प्रत्यग्ब्रह्माभेदपरं नशक्य मन्यथयितुम् तदुक्तं तापनी प्रदीपिकायां मंत्रराजमध्यगतनृसिंहपदेनै

3 वच ब्रह्मात्मैक्यं प्रतिपत्तव्यमि त्याह । एष उएवनृ इत्यादिना यदवादिप्रत्यागात्मनि सर्वजनीनो बंधः सत्य इतितदसाधुर्देहा त्मभावस्याऽसत्यस्यापि सर्वंजनीनत्वात् किंच मंत्रराजमध्यस्थनृसिंहपदार्थप्रकटनाय द्वितीयखंडे नुर्जीवस्य स्व स्वरूपभूतस्य चि- जर्थं बंधं हंतीति नृसिंह इति च व्युत्पत्ति मभिप्रेत्य स्वात्मबंधहर इत्यभेदेनाऽऽवगतस्य तव स्वात्मीयबंध निवर्तकत्वाऽभि धाना द्बंधवै तथ्यं दुर्निवारं नहि बंधसत्यत्वे प्रतीचस्त्व द्रूपत्वं बंधस्य स्वात्मीयत्वं वा तस्य तत्त्व ज्ञाननिवर्त्यत्वं वा संभवती ति नहिसत्य- स्यशक्यं ज्ञाननिवर्त्यत्वं दर्शयितुं एत दभिप्रेत्याऽर्थवद्भूयादि त्युक्तम् तस्मा न्नसत्यो बंधो न वाभेद इति नन्वह मपि सिंहाऽऽकृतिः

शरीरादि मत्वा तदभिन्नत्वाच्च जीव एव स्यामिति कथं मदभेदादिना बंधो मिथ्येति त त्राह । नत्वं नेति । यदा यदा हि धर्मस्य ग्लानि र्भवति भारत अवजानंति मां मूढा मानुषीं तनु माश्रित मित्यादि भवदीयवचना देष सर्वेश्वर एष भूताधिपति रनश्च न्नन्यो भि-चाकशीती त्यादिवचनाच्च लोकानां भोगापवर्गार्थं लीलया नानाऽवतारवतो पि जीवत्व संभावना ऽयोगात् मय्यपि जीवत्वस्य प्रतिबिंब-त्वादिव दौपाधिकभेदेनैव व्यवस्थितत्वा च्च न सत्यत्व मिति भावः एवं स्वाऽभेद मीश्वरे ऽभिधाय निःशंकंत मात्मत्वेन संबोधय न्नभेद मुपसंहरति । तदहमिति । तत्तस्मादित्यर्थः तर्हि किं मम जीवमात्रत्व मित्याशंक्य न जीवस्यै वाऽऽरोपित विपरीत रूपपरित्यागेन ब्रह्म रूपे पर्यवसान मित्याह । भूयासमिति । विधिवदावश्यकत्वादिदमन्यथयितु मशक्यं इत्याशायेन विध्यर्थलिङः प्रयोगः अथवा उक्त

हृदयालय मालंब्य करुणारस सुंदरं गुरूणां चरणांभोजं कुर्वे भेदस्य धिक्कृतिं ३

विधया समस्तबंधहरे परमेश्वरे त्वयि सति मयि प्रातीतिकोऽपिबंधो न युक्तः अत स्तमपि निवारयेति प्रार्थयते । भूयासमिति । त्वय्यं-वांतर्भूतः स्या मित्यर्थः ।२। इदानीं स्वसामर्थ्य निदानंदर्शयन् चिकीर्षितंप्रतिजानीते । हृदयेति । गुरूणांश्रीचरणपरिचरणनैपुण्यपरिणति त्वा दसाधारणस्वकीयविद्यादिसंपत्तेःगुरुभिः कृतां करुणा मारक्तत्व सुकुमार त्वादिनांऽभोज सदृशतच्चरणकृतां मत्वा करुणा रस सुंदर मित्युक्तम् भेदस्य धिक्कृति र्नाम तुच्छीकरणं तच्च प्रमाणादिनिरासपुरः सरं तन्मिथ्यात्वसाधनं तदत्र प्राधान्येन क्रियत इत्यर्थः ॥ ३ ॥

यद्यपि स्वमतेभेदमिथ्यात्वसाधनेना ऽद्वैत सिद्धौ श्रुति रेव भागवती प्रमाणं तथापि न्यायमे व बहुमन्यमानंप्रतिन्यायत स्ताव ज्जीवपरभेदमिथ्यात्वं साधयति । अंतः करणेति । अहमितिप्रतीयमानः अह मिति प्रवर्तमानव्यवहारहेतुप्रतीतिगोचरः जीव 

पदाऽभिधेयो जीवः परस्मान्न भिद्यते अव्यक्ता त्परोयोऽसंसार्यात्मा तत्प्रतियोगिक भेदात्यंताऽभाववानि तयर्थः एतच्च स्वरूपेणै व स्व-
संसृज्यमानाधिकरणनिष्ठात्यंताभावप्रतियोगित्वं मिथ्यात्वमिति मतेनोक्तम् अत्र कर्तृत्वादिधर्मिवाचकजीवपदवाच्यत्व महमिति प्रती-
यमानत्वंच वस्तुतः सिद्धांतेऽहंकारेऽपीति तस्य पक्षत्वे बाधः स्यात्तद्वारणायांऽतःकरणातिरिक्ते त्युक्तं अंतःकरणातिरिक्तोजीव इत्येताव-
त्युक्ते "आमुक्ते र्भेद एव स्यात् जीवस्य च परस्य च। मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावत" इतिमते मुक्तजीवे सिद्धसाधनं स्यात् परस्मिन्
स्वप्रतियोगिकभेदाऽभावेन तदभिन्नजीवेऽपि तदभावात्त न्निरासायाऽहमिति प्रतीयमानइत्युक्तं तदपीश्वरे परमतेऽस्तीति तत्र सिद्धसा-
धनतावारणाय जीव इत्युक्तम् स्वमते तु अंतःकरणातिरिक्तोऽहमिति प्रतीयमान इत्येकः पक्षनिर्देशः अंतःकरणातिरिक्तो जीव इत्यपरोऽ-

**अंतः करणातिरिक्तोऽहमिति प्रतीयमानोजीवः परस्मान्नभिद्यते चेतनत्वा त्पदार्थत्वा द्वा ब्रह्मवत्-**

भिप्रेतः अत्रोक्तसाध्ये चेतनत्वादित्येव हेतुः परप्रतियोगिकभेदाऽऽश्रयस्याऽनात्मवर्गस्य कल्पितस्य कल्पितभेदाऽधिष्ठानत्वाऽभावेन तत्र
तदत्यंताऽभावाऽभावात् पदार्थत्वादित्यस्य तत्र व्यभिचारापत्ते रहेतुत्वात् तत्त्वमिति वाक्यस्य पदार्थत्वादिति वाऽयं हेतुर्विवक्षितः तत स्वो-
त्वव्यभिचाराऽभावादत्राऽयमपि हेतुर्भवत्येव यस्मिन् मतेऽधिष्ठानेऽपिसत्वाऽवच्छिन्नतयैवारोपिता ऽऽत्यंताभावो न स्वरूपेण यन्मते चा
धिष्ठानमेवा रोपिताभावः तत्र मतद्वयेऽपि परप्रतियोगिकस्वाऽनधिकरणवृत्त्यत्यंताभावप्रतियोगिभेदवा न्न भवतीतिसाध्यं विवक्षितं-
तत्र जीव इत्येव पक्षनिर्देशः यथा श्रुतपदार्थत्वा दित्यपि हेतुः घटादे रपि पक्षसमत्वे नव्यभिचाराभावात् परप्रतियोगिकभेदवति
जीवे स्वाऽनधिकरणवृत्त्यत्यंताऽभावप्रतियोगित्वविशिष्टभेदनिषेधो विशेषणाभावे न पर्यवस्यति विशेषणाभावस्य भेदे स्वाधिकरणमा-

त वृत्त्यत्यंताभावप्रतियोगित्वेन वा स्ववै यधिकरण्याऽनधिकरणाऽत्यंताऽभावप्रतियोगित्वेन वेति भेदे तन्मतद्वयाऽभिमतमिथ्यात्वसिद्धिः नचाऽधिष्ठानातिरिक्ताभाववादे जीवनिष्ठपरभेदे स्वानधिकरणपरवृत्त्यतंग्रताभावप्रतियोगित्वसत्वा त्तदभावो बाधितइतिवाच्यम् तन्मते एकस्यैवभेदस्य विभागादिव द्वर्मिप्रतियोगिनिष्ठत्वेन तस्य तदनधिकरणत्वाभावात् नचोक्तविशेषणविशिष्टभेदस्य निषेध्यस्यो क्तमतद्वयाऽप्रसिद्धत्वेन तन्निषेधायोग इति वाच्यम् परप्रसिद्ध्याऽपरो बोधनीय इति न्यायेन तदुपपत्तेः तद्वैग्रक आहु रसदेवेदमग्रआसीदित्यादिना शून्यवादिमतसिद्धस्याऽसत्कारणत्वस्य निषेधात् वेदवदेव वेदविदांव्यवहारस्य परभ्रांतिनिवृत्तिमात्रप्रयोजनत्वादितिभावः । अप्रयोजकत्वेन व्याप्यत्वासिद्धिमांशंक्य परिहरति । विपच्चइति । यदि भेदः सत्यः स्यात्तर्हि तत् प्रमाण तत्स्वरूप तद्धर्मि प्रतियोग्यादि नि-

## विपक्षे भेदग्राहकप्रमाणाभावादभेदश्रुत्यप्रामाण्यप्रसंगाच्च नाऽप्रयोजकत्वम् ॥

रूप्येत वक्ष्यमाणविधया च तदशक्यं निरूपयितुम् तथा जीवपरभेदस्य सत्यत्वे तदभेदश्रुतीनामप्रामाण्यंस्यात् भेदाऽभेदाऽसंभवस्य वक्ष्यमाणत्वादित्यर्थः प्रथमं तर्कस्य विपर्ययपर्यवसानं दर्शयन् भेदमात्रस्य सत्त्वाऽसंभवं साधयति । तथाहीति । अयुक्ते रिति लक्षणाद्यभावेन तदनुपपत्ते रित्यर्थः मानानुग्राहकयुक्त्यभावाच्चे ति वा। सत्यानां परस्परभिन्नानां जीवानां कथमेकेनेश्वरेणभेदाभावइत्याशंक्य यद्यपि जीवाः स्वरूपेणसत्यास्तथापि तद्भेदो न वास्तव इत्याह। जीवानामिति। जीवानां परस्परमपि भिदानेत्यन्वयः जीवेश्वरयो र्जीवानां च स्वाभाविकभेदाऽभावेऽप्यौपाधिकभेदो वास्तवोऽस्त्वित्याशंक्य जडप्रपंचस्य स्वरूपेणापिमिथ्यात्वेन तद्भेदस्यापितथात्वात् तत्प्रयुक्तचेतनभेदः कथं सत्यः स्यादित्यभिप्रेत्याह । अचितांचेति। अचितां जडानामपि परस्परमपि न भिदा जीवेश्वररूपादात्मनः सकाशादपि नभिदेत्यर्थः विमतोभेदो

नसत्य: अप्रामाणिकत्वादनुपपन्नत्वाद्वादेहात्मभाववदित्युक्तौ हेतोर सिद्धिं शंकते।अथकथमिति ।तत्र तावदभावप्रत्यक्षत्ववादी मानांतर-
वार्तानभिज्ञः प्राकृतजनैर प्यनुभूयमानत्वाज् जीवेश्वरभेदस्य तत्र प्रत्यक्षमेवप्रमाणमित्युपपादयति।नाहमिति।सर्वसंमतस्यापिभेदप्रत्यक्षस्य
देहात्मभावानुभववत् परीक्षकानुभवबाधितत्वादप्रमाणत्व मित्याशंक्य तद्बाधकानुभवासंप्रतिपत्त्तेर्मैव मित्याह।नभ्रांतिरिति।तथापितद्बेतो-
रिंद्रियादेरसंभवात्साभ्रांतिरित्याशंक्याह । नवातदिति । श्लोकस्यपूर्वार्द्धं विवृणोति । अस्तीति । प्रत्यक्षस्य व्यावहारिकभेदविषयत्वात् न तत्त्वा-
वेदकत्वमित्याशंक्याह ॥ तच्चेति ।च शब्दोऽवधारणे तदबाधितमेवेत्यर्थः तस्य किमभेदग्राहिप्रत्यक्षंवाधक मुताऽ न्यत् नद्वितीयः तदनिरूप-

तथाहि“मानाभावादयुक्तेश्च नभिदेश्वरजीवयोः जीवानामपिचितांचैव नात्मनोनपरस्परम् ॥ ४ ॥”

अथ कथंभेदेमानाभावः “नाहमीश्वर इत्येतप्रत्यक्षंसर्वसंमतं नभ्रान्तिर्बाधविरहान्नवातद्धेत्वसंभवः । ५

अस्तिखल्वस्मदादिप्रत्यक्षं नाहमीश्वर इति

णादित्यभिप्रेत्याऽऽद्यं निरस्यति। अहमिति। चतुर्थपादव्यावर्त्यामाशंकामाह। नन्विति।किमात्मनि ईश्वरभेदप्रत्यक्षे बहिरिंन्द्रियं हेतु रुत
मनःनाद्यः बाह्येन्द्रियाणां रूपादिरहितात्मग्रहणासामर्थ्येन तद्गतभेदग्रहेऽ प्यसामथर्यादित्याह । नतावदिति। मनःसमवधानदशायामेवा-
त्मभेददर्शनात् मन एव तत्र मानमिति द्वितीय माशंकयाह । मनसश्चेति । मनो न प्रमाणं प्रमाणसहकारित्वात् प्रमाणत्वपर्यवसाना-
-धिकरणसहकारित्वादित्यर्थः ततश्च वाक्याद्यवयवपदादिषुनव्यभिचारः प्रमाणमपि प्रमाणादि सहकारीति तद्व्यावृत्तये प्रमाणेत्युक्तम् आ-
लोकादिव द्विपक्षे चाऽ.लोकादेरपि परमते प्रमाणत्वप्रसंगः ततश्च मनसः क्वचिदप्यप्रमाणत्वादन्यस्याऽऽत्मभेदग्राहिप्रत्यक्षस्याऽभावा त् कृ-

प्रकरणाऽजन्यत्वा त्तत्प्रतीति भ्रांतिरित्यर्थः प्रत्यक्षात्मविशेषगुणेषु मानांतरस्याभावात् मनस स्तत्र प्रमाणत्वमावश्यकं ततश्चोक्ताऽनुमान-
भे० मप्रयोजकमिति जीवपरभेदेपि तस्यैवप्रमाणत्वा न्नतत्प्रतीति भ्रांति रिति स्वमतसिद्धवत्कारेण पूर्ववादी परिहरति। नसुखेति। सुखादि-
धि० प्रत्यक्षस्य जन्यत्वमे वा ऽसिद्धं वक्ष्यमाणविधया तत्र कादाचित्कत्वानुभवस्य साधनोपादानस्य च परमतेसुखादिसमवाये इव सुखादिकादा-
५ चित्कत्वेनाऽप्युपपत्तेः सुखाद्युपाधिपरामर्शं विना तदनुभवे स्वतोभेदानवगमात् लाघवानुगृहीततदनुगतबुद्ध्या तदेकत्वसिद्धौ तन्नित्यत्व-
सिद्धेर्न तस्यकरणापेक्षा आत्मनस्तु स्वसत्तायां संशयाद्यगोचरत्वेन स्वतएवप्रकाशमानत्वात् कर्तुः कर्मत्वविरोधाच्च तदनुभवेपि न मनः क-

तच्चा बाधितं अहमीश्वर इत्यप्रतीतेः ननु नतावदिदं चक्षुरादिजन्यं आत्मनि तदसामर्थ्यात् म-
नसश्च प्रमाणांतरसहकारिणः पृथक्प्रमाणत्वायोगात् अतः क्लृप्तकरणाभावात्साभ्रांतिरितिचेन्न
सुखाद्युपलब्धेः प्रमाणांतर जन्यतया मनस एव तत् प्रमाणत्वे भेदस्यापि तत् प्रमाणत्वात्

रणं ततश्च क्वचिदपिमनसः प्रमाणत्वाभावात् भेदानुभवेऽपि तस्य तत्त्वमयुक्तमित्याद्यरुचिं सूचयन् मनसः प्रमाणत्वमंगीकृत्यापि प्रकारांतरेण-
भेदप्रत्यक्ष माक्षिपति। नन्वेवमपीति। प्रतियोगितद्व्याप्येतरयावत्तदुपलंभकसमवधानसहितानुपलंभस्या ऽभावग्राहिप्रत्यक्षसहकारित्वाभ्यु-
पगमात् प्रतियोगिप्रत्यक्षत्व मभावप्रत्यक्षत्वे तंत्रं अन्यथा घटादौ जलपरमाण्वाद्यभावस्य प्रत्यक्षत्वप्रसंगात् तथा चाऽप्रत्यक्षेश्वरप्रतियो- ५
गिकाऽन्योन्याभावरूपभेदस्य प्रत्यक्षत्वं न संभवतीत्यर्थः स्यादेत देवं यदि प्रतियोगिप्रत्यक्षत्व मभावप्रत्यक्षत्वेप्रयोजकं स्यात् नत्वे तदस्ति

तत्र तस्य प्रयोजकत्वं किं तद्व्याप्यत्वं उत तद्व्यापकत्वं नो भयमपि व्यभिचारादिति परिहरति। नहि प्रतियोगीत्यादिना। उक्तव्यभिचारोऽसंमतइति मन्वानं प्रति तमुपपादयन्न भावप्रत्यक्षत्वं प्रति समयनियतं प्रयोजकमाह। किंतु यत्रेति। यत्रा ऽभावाऽधिकरणे यस्यप्रतियोगिनस्तर्कितसत्वं तदनुपलब्धिविरोधित्वेन तर्कितुं शक्यः तत्र तदभावः प्रत्यक्षः एवं सति घटत्वस्यमनसिसत्वेपि मनसोऽतींद्रियत्वादतींद्रियगतजातेरपि मनस्त्ववदतींद्रियत्वेनानुपलंभविरोधित्वाभावात् तत्र तदभावो न प्रत्यक्षः मनस्त्वस्य तु घटे सत्वे व्यक्तिग्राहिकेंद्रिययोग्यत्व-

नन्वेवमपि अतींद्रियईश्वरभेदः कथंप्रत्यक्षःस्यात् प्रत्यक्षप्रतियोगिकाभावस्यैवप्रत्यक्षत्वादितिचेत्

नहिप्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षेतंत्रं मनसिघटत्वाभावस्याऽप्रत्यक्षत्वात् घटेमनस्त्वाभावस्य-

प्रत्यक्षत्वाच्च किंतु यत्र यत्सत्वमनुपलब्धि विरोधि तत्र तदभावःप्रत्यक्षः ततश्च जीवेतदभेदवदीश्व-

राभेदोप्यस्तिचेत्प्रत्यक्षःस्यात् इति तदनुपलंभात्तद्भेदःप्रत्यक्षः

नियमात्तद्गतजाते र्घटत्ववदेवाऽनुपलब्धिविरोधित्वस्य सुवचत्वात् तदभावस्तत्रप्रत्यक्ष एवेतिभावः फलितमाह। ततश्चेति। स्तंभे पिशाचाभेदसत्वे स्तंभाभेदव त्तस्याऽ प्युपलंभापातेनाऽ नुपलंभविरोधित्वा त्तदभावरूपः पिशाचभेदः स्तंभे यथा स्तम्भः पिशाचोनभवतीति प्रत्यक्षविषय स्तथाजीवे ब्रह्माऽभेदसत्वे जीवाभेदव त्तदनुपलंभायोगा त्तत्र तदभावरूपोब्रह्मभेदः प्रत्यक्ष इत्यर्थः ननिदंचिंत्यं घटेम-

नस्त्वाऽभावानुभवः प्रत्यक्षो मनसि तु घटत्वाभावानुभवो न प्रत्यक्षः स्तम्भे पिशाचभेदः प्रत्यक्षः पिशाचे तु स्तम्भभेदो न प्रत्यक्ष इत्या दिव्यवस्था कथमिति नह्यत्र किंचित्प्रमाणं शक्नोत्यपि शक्यं निरूपयितुं पारिभाषिकप्रयोजकानुरोधेन तदव्यवस्थायामतिप्रसंगात् व्यवस्थिताऽनुभवानुरोधेनैव तत् प्रयोजकस्य कल्प्यत्वाच्च प्रत्यक्षगोचरस्तंभाभेदे पिशाचेपि तत् प्रत्यक्षत्वापादनं सुकरमिति तत्रापि स्तंभभेदः प्रत्यक्षः स्यात् नह्यभेदरूपप्रतियोगिसत्त्वस्याऽनुपलंभविरोधित्वापादनं धर्मिद्वारकमेव न प्रतियोगिद्वारकमिति शक्यं निरूपयितुं धर्मिप्रति-

भे० नन्वेवमप्ययमौपाधिक एव शरीरविशिष्टस्येश्वरभेदानुभवादिति न भेदधीः प्रमा स्यादिति

धि० चेन्न अहमितिप्रत्यक्षस्य शुद्धात्मविषयत्वेन तत्प्रत्याय्यभेदस्यानौपाधिकत्वादिति चेत् मै

६ वं "अप्रमाणं मनोऽसक्तमयोग्यानुपलब्धिकं सोपाधिकस्य भेदोऽयं नाध्यक्षमितिगोचरः" ॥ ६ ॥

योगिनोरेकत्वात् किञ्च यद्यभावाधिकरणे प्रतियोग्यनुपलंभो निश्चितः स्यात्तदा खलु तत्र तर्कितं तत्सत्त्वं तदनुपलंभविरोधित्वेन शक्यं तर्कितुं तथा चानुपलंभस्याप्युपलंभाभावत्वात् तत्प्रतियोग्यनुपलंभांतरनिश्चये सति प्रत्यक्षेण तन्निश्चयो वाच्यः एवं तस्य तस्यापीत्यनवस्थानान्नकोप्यभावः प्रत्यक्षपद्धतिमध्यासीतेत्यत्राद्यारुचिं सूचयन्नंगीकृत्याप्यौपाधिक एव जीवपरभेदः प्रत्यक्षगोचरो न स्वाभाविकः औपाधिकश्च भेदः ६
स्वाभाविकाभेदेपि न विरुध्यते तस्य मिथ्यात्वादिति शंकते। नन्वेवमपीति। कृशोऽहमित्यादिप्रतीतिगोचरः कार्श्यादिर्यथा शरीराद्युपाधिकतयात्मनि कल्पितः तथा नाहमीश्वर इति प्रतीतेरन्वयव्यतिरेकाभ्यां शरीरादिप्रतिभासाधीनत्वात् तद्गोचरो भेदस्तदुपाधिको न वास्तव इत्यर्थः

जाग्रत्स्वप्नयोः एकशरीरानवभासेऽप्यहंप्रत्ययस्यैकरूपस्यानुवर्तमानत्वा द्विविक्तात्मैवतद्गोचरोवाच्यः तथाच तत्र प्रतीयमानभेदस्यौपाधिक-
त्वायोगात्सः स्वाभाविकएवेत्यभिप्रेत्यपरिहरति। नचाहमितीति। सिद्धांतीमानाभावादयुक्तश्चेत्यतदुपपादयितुंभेदस्यप्रत्यक्षप्रमाणगोचरत्व-
मुक्तं तावदयुक्तमित्याह। मैवमिति। चाक्षुषत्वावच्छिन्नज्ञानंप्रति लाघवेनालोकस्यानुकूलत्वनिश्चयेना लोकाभावेचाक्षुषत्वायोगाद नुपलब्धेरेव
तत्रप्रामाण्यमावश्यकमिति तस्याएवप्रत्यक्षत्वं नाभिमताभावमात्रे प्रामाण्योपपत्ते र्नान्योन्याभावात्मकभेदेप्रत्यक्षप्रामाण्यंयुक्तमितिभावः।
पटवादिसुखाद्युपलब्धेः प्रमाणांतराजन्यतया मनस एव तत्रप्रमाणत्वं नात्मभेदेपि तस्य प्रामाण्यमिति तदप्ययुक्तमित्याह। अप्रमाणमिति।
नास्तिप्रमाणंयस्मिं स्तदप्रमाणं नहि परीत् प्रेक्षितेऽणुपरिमाणवतिक्रमिककार्यंजननसमर्थमनसि किंचित् प्रमाणं शक्यं निरूपयितुं सर्वेन्द्रि-
येषु तत्तद्विषयसंबद्धेषु युगपदनेकज्ञानोत्पत्तेःक्वेषुचित्प्रज्ञावत्स्वनुभूयमानतया तदनुपपत्तिरूपलिंगस्या सिद्धेः सिद्धौ च ज्ञाना श्रयस्यैवला-
घवेनक्रमजननसामर्थ्यंकल्पनयातदुपपत्तौ तत्समर्थधर्मिकल्पनेगौरवात् शब्दादिज्ञानक्रमनियमस्य मनसः परमते श्रोत्रादिसंयोगनियमवद-
दृष्टादेवोपपत्तेः सुखाद्यनुभवस्य च नित्यतया करणाद्यनपेक्षायावश्यमाणत्वा त्कुतः परकीयमनःसिद्धिः कुतस्तरांतस्यप्रामाण्यं कुतस्तमां चा
त्मभेदस्यप्रत्यक्षप्रमाणगोचरतेतिभावः यद्वाश्रुत्यनुभवसिद्धमनसोंगीकारेपि क्वापि न तत् प्रमाणमित्याह। अप्रमाणमिति। मनो न प्रमा-
णं ऐन्द्रियकविशेषगुणजातीयानाश्रयद्रव्यत्वात् दिक्कालवत् अत्र परंप्रति विशेषगुणाऽनाश्रयद्रव्यत्वादित्येवहेतुः स्वमतसाधारण्ये नासि-
द्धिपरिहारायैंद्रियकेत्यादिविशेषणम् अथवा आत्मतद्धर्म गोचरानीश्वरसाक्षात्कारो नविशेषगुणशून्यप्रमाणजन्यः साक्षात्कारत्वा त्संमतवत्
ततश्च मनसोऽन्य त्राप्रसंगा न्नक्वापि प्रामाण्यमिति सिद्ध्यति विपक्षे ग्राह्यसजातीयगुणानाश्रयस्यापिग्राहकत्वे श्रोत्रादीनां नभस्त्वादिकं

नसिद्धेरदितिभावः किंच मनो न भेदादौ प्रत्यक्षंप्रमाणं तदसन्निकृष्टत्वात् संमतवत् नच हेत्वसिद्धि र्निरवयवात्मनिमनसः प्रदेशवृत्तिसंयोगाऽसं
भवस्यवक्ष्यमाणत्वात् तद्घटितसंबंधांतरस्यांप्ययोगाद्युतसिद्धयोः समवायाभावाद नवस्था ·द्यापातेनतस्यक्वाप्यसंमतत्वाच्च विशेषणतादेः स-
भे० न्निकर्षत्वेन क्वाप्यक्लृप्तत्वाच्चे त्यभिप्रे त्याह । असत्त्वमिति । किंचा भावग्राहकप्रत्यक्षसहकारितया पराभ्युपेतयोग्यानुपलंभाभावाच्च न मनो-
ऽभावरूपात्मभेदग्राहकम् नच हेत्वसिद्धिः तन्मतेसर्वगतात्माभेदस्येवब्रह्माभेदस्यपरिच्छिन्नत्वादिभ्रमहेतुदोषा दात्मनिसतोप्यनुपलंभोपपत्ते
धि० र्विशुद्धचित्तस्य तु तदनुपलंभोसिद्ध इत्यभिप्रेत्याह । अयोग्यानुपलब्धिकमिति । किंच स्थूलसूक्ष्मशरीरोपाधितादात्म्यापन्नात्मगतायाः भेदप्र-
७ तीते र्वक्ष्यमाणत्वा त्तस्य च रजततादात्म्यापन्नशुक्तीदमंशगतशुक्तिप्र तियोगिकभेदव न्न प्रत्यक्षप्रमितिगोचरतेत्याह । सोपाधिकस्येति । पू-

प्रमाणसहकारित्वा द्विषयस्याप्यभावतः न प्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वतः । ७ ।

र्वोक्तहेत्वतिरिक्तहेतून् संगृह्णन् मनसोप्रमाणत्वमुपपादयति । प्रमाणेति । विषयस्येति । अनन्यथासिद्धप्रमेयशून्यत्वादित्यर्थः प्रमादेरित्यत्रादि
पदार्थ इच्छादिः मनोनप्रमाकरणंतदाश्रयत्वात् प्रमातृवत् स च केवलांतः करणातिरिक्तस्तत्तादात्म्यापन्नः सिद्धांतेप्यस्तीति न दृष्टांता
सिद्धिः नापि परमतेपरमेश्वरेव्यभिचारः नच प्रमाद्याश्रयत्वस्यमनस्यसिद्धिरितिवाच्यम् अहमुपलभ इत्याद्यनुभवेन“तयोरन्यः पिप्पलंस्वा
द्वत्तीति सत्वंकामः संकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरि”त्येतत्सर्वंमनएवेत्यादिश्रुत्याबुद्ध्यादिगुणलिंगकपरिशेषानुमा- ७
नेनचप्रमादेरहंकारात्मकमनोधर्मत्वस्यवक्ष्यमाण त्वादिति परमते मनसः प्रमाणत्वं प्रमाणाऽभावात् पारिभाषिकम् अस्मन्मते-

तु तदप्रमाणत्वमनेकप्रमाणासिद्धं न पारिभाषिकमिति भावेना स्माकमित्युक्तं पद्यस्याद्यपादं विवृणोति। मनोनेति। ननु न तावत्सकल-
प्रमाणसहकारित्वं हेतुः परमते मनसोऽपिप्रमाणत्वेन तत्रतत्सहकारित्वासिद्धेः नापिस्वव्यतिरिक्तसकलप्रमाणसहकारित्वं स्वव्यतिरिक्तवि-
शेषणस्य व्याप्तिग्रहो ऽनुपयुक्तत्वेना सिद्धिपरिहारमात्रप्रयोजनस्याप्रयोजकत्वात् नापि किञ्चित्प्रमाणसहकारित्वं हेतुः एकत्रप्रमाणभूत-
स्याप्यन्यत्रप्रमाणसहकारित्वोपपत्तेर प्रयोजकत्वादतएवसकलप्रमाजनकत्वं हेत्वर्थइति निरस्तमिति तन्न किंचित्प्रमाणेसहकारित्वस्यैव
हेतोर्विवक्षितत्वात् यदुक्तं तस्याप्रयोजकमिति तत्राह। प्रमाणस्येति। प्रमाणत्वपर्यवसानाधिकरणस्येत्यर्थः यदिमनः प्रमाणंस्यात्तर्हिचक्षु-

## मनोनप्रमाणं प्रमाणसहकारित्वात् कालादिवत् प्रमाणस्यचक्षुरादिवत्प्रमाणांतरासहकारित्वात्।
## वाधकस्य तत्प्रयोज्यजातिविशेषस्यात्रापितुल्यत्वात् नहिचक्षुरादिजन्यरूपादिज्ञानेमानस

रादिवत्प्रमाणसहकारि न स्यादितिहेतूच्छित्तिरेव विपक्षेवाधिकेति नाप्रयोजकतेत्यर्थः ननुगंधादिज्ञानेष्व योग्यत्वादेव चक्षुरादेर्न स-
हकारित्वं तत्सन्निकृष्टार्थविशेषविषयशाब्दबोधादौ चाक्षुषत्वादिजातिविशेषापत्तिश्च चक्षुरादिजन्यत्वेवाधिकेति न तत्रचक्षुरादिसहका-
रीति वैषम्यमाशंक्याह। वाधकस्येति। रूपादिज्ञानस्य मनःकरणकत्वे सुखादिज्ञानवत्तत्रा ऽपि मानसत्वरूपजातिविशेषापत्तिर्वाधिकेति
तुल्यतेत्यर्थः इष्टापत्तिमाशङ्क्याह। नहीति। चाक्षुषादिज्ञाने मानसत्वरूपजातिविशेषः किमनुभवबलादभ्युपेयते उतमानांतरात् नाद्यः तत्र
तदनुभवस्याऽनुपलब्धिपराहतत्वात् वैशेषिकादिमते व्युत्पत्तेः सोऽनु भूयते इति चेन्न वादिपरिकल्पितानुभवमात्राद्वस्तुसिद्धावतिप्रसंगात्

नद्वितीयः रूपादिज्ञाने मानसत्वजातिसाधकमानांतरानिरूपणात् नच मनःकर्तृकत्वादेव तत्र मानसत्वसिद्धिरितिवाच्यं हेतोरसिद्धत्वादन्योन्याश्रयात् ननु सुखादिज्ञाने मनःकरणकज्ञानत्वान्मानसत्वसिद्धिरिति चेन्न सुखादिज्ञानेऽपि मनःकरणकत्वस्य मानसत्वस्य च निराकरिष्यमाणत्वात् प्रत्युतवैपरीत्ये प्रमाणस्य निरूपितत्वादित्याह । मनःप्रमाणत्वस्येति । विपक्षे बाधकांतरमाह । मनसइति । सर्वत्रां ऽतर्बहिर्विषयेषु मनस एव प्रमाणत्वे बहिर्विषयप्रमायामपि तदेव करणंस्यादिति ननु चक्षुरादेः किं प्रयोजनं रूपादिज्ञाने चाक्षुषत्वादिजाति र्वा कथं स्यादित्या ऽऽशंक्याऽऽह । चक्षुरादिष्विति । रसादिव्यंजकत्वालादिरालोकादीत्यादिपदार्थः रूपादिज्ञाने क्रियात्वप्रयुक्तक-

त्वंकश्चिदनुभवति नचाननुभूयमानजातिकल्पने किंचिन्मानमस्ति ।
मनःप्रमाणत्वस्यभावस्याबाधितानुमानेन निश्चितत्वात् मनसः सर्वज्ञानकरणत्वे तदेवसर्वत्रप्रमाणंचक्षुरादिष्वालोकादिवत्सहकारिमात्रमित्येककरणतापत्तिः ननुसुखादिप्र

रणाकांक्षायामनसैव प्रशांतत्वा च्चक्षुरादि रालोकादिवन्मनःसहकारित्वमात्रत्वं यद्यऽसाधारणकरणप्रयोज्यैवजातिर्ज्ञाने तर्हिज्ञानेचाक्षुषत्वादिजात्यभाव इष्ट एव नच तदभावेचक्षुरादिजन्यत्वमालोकादिजन्यत्वं वातद्दुर्ग्रहमितिवाच्यं रूपादिविषयसाक्षात्कारत्वादिना तद्ग्रहोपपत्तेः गौरवस्य प्रामाणिकतयादोषत्वात् नच ज्ञानाकरणत्वे चक्षुरादे रिन्द्रियत्वानुपपत्तिरिति वाच्यं शरीरसंयुक्तत्वेन ज्ञानकरणत्वादिना स्मृत्यजनकज्ञानजनकमनःसंयोगाश्रयत्वादिनावातदुपपत्तेः अतएव मनसोबाह्यप्रमाजनकत्वंयदेवासाधारणंकारणंसह- ८

कारि तत्प्रमाणांतरमिति निरस्तम् अ।लोकादौव्यभिचारादित्यर्थः सुखादिसाक्षात्कारइंद्रियजन्यः जन्यसाक्षात्कारत्वात् रूपादिसाक्षा-
त्कारवत् ततश्चक्षुरादीनां व्यवस्थितरूपादिविषयत्वा देकैकाभावेप्यंधादिषु सुखाद्युपलब्धिदर्शनाच्च परिशेषात्तदतिरिक्तमनः प्रमाणसिद्ध-
इतिशंकाम नुवदति । ननुसुखादीति। नकेवलंसुखाद्युपलब्धाविवमनः करणं रूपादिज्ञ।नेप्य नुभवोपपत्तिभ्यां मनसः करणत्वमुपेयमित्याह
एवंमनसेति।व्यासंगोहींद्रियसन्निकर्षादौ सत्यपि सन्निकृष्टविषयज्ञानानुदयः सर्वसम्मतः तस्यचेंद्रियेणसह संयोगरूपमनोव्यापाराभावमा-
त्रप्रयोज्यत्वान्मनसोबाह्यं ज्ञानकरणत्वमगत्या ऽपेयं नच ज्ञानांतरसामग्रीप्रतिबंधादेव तदुपपत्तिरिति वाच्यं विनिगमकाभावात्करण-

त्यक्षस्य परिशेषान्मनएवकरणंएवंमनसेदंपश्यामीत्यनुभवाद्व्यासंगानुपपत्ते श्चबहिरपिमनः
करणमितिचेतन सुखादि व्यवहारः स्वविषयज्ञानजन्यः।

व्यापाराभावादेव तदुपपत्तौ प्रतिवंधककल्पनायोगाच्चेति भावः सुखादिप्रत्यक्षस्य मनःकरणमिति एतत्तावदयुक्तमिति दूषयति । नेति ।
सुखादिसाक्ष।त्कारस्येंद्रियजन्यत्वे सिद्धे हि परिशेषान्मनस्तत्करणतयासिद्धिरत् नचोक्तानुमानात्त तित्सद्धिःशब्देतरोद्भूतविशेषगुणाना-
श्रयत्वे सति ज्ञानजनकमनःसंयोगाश्रयत्वमिंद्रियत्वमिति परेषामभ्युपगमा ऽन्मनः सिद्धेः पूर्वमिंद्रियत्वासिद्धौ इंद्रियजन्यत्वानुमानायो-
गात् नचशरीरयुक्तं ज्ञानकरणमतींद्रियमिंद्रियमितिनोक्तदोषइतिवाच्यं चक्षुरादेस्तेनरूपेणरूपादिसाक्षात्कारजनकत्वस्याक्लृप्तत्वेनसुखादि-
साक्षात्कारकरणस्य तेनाकारेणानुमानायोगात् परमतेशरीरगतशैत्याभिव्यंजकव्यजनपवनादा विंद्रियलक्षणस्यातिव्याप्ते र्वक्ष्यमाणवि-

धयामनसोज्ञानकरणत्वासंभवेनाव्याप्तेश्च नापीन्द्रियत्वंजातिः तेजस्त्वादिनासांकर्य्यात् नच तत्तद्ग्राह्यमिंद्रियत्वं नानाइंद्रियपदस्यानेकार्थत्वप्रसंगात् जन्यसाक्षात्कारमात्रेनुगतव्यापकाभावेन व्याप्तिग्रहायोगाच्च ननु सुखाद्युपलब्धेः करणजन्यत्वमात्रं साध्यं ततो नोक्त दोष इति चेन्न तथासति धर्मकल्पनालाघवेन दृष्टादृष्टेरेव कस्य चित्करणत्वकल्पनोपपत्तेरर्थान्तरत्वात्करणव्यापारस्य करणांतराजन्यतया कार्यमात्रस्य करणजन्यत्वज्ञानुपयोगेनाप्रयोजकत्वाच्चेतिभावः किंचसुखादिसाक्षात्कारे जन्यत्वासंप्रतिपत्तेर्विशेषणासिद्धौ हेतुस्तदुत्पत्त्याद्यनुभवस्यान्यथासिद्धेरनुपदमेवंवक्ष्यमाणत्वात् प्रत्युतसुखादिसाक्षात्कारादिनानुमानस्यैकत्वतदजन्यत्वमेव प्रामाणिक-

व्यवहारत्वात्सम्मतवदित्यनुमानाल्लाघवाच्चतदेकंसिद्धं

नचदुःखादिप्रत्यक्षस्योत्पादविनाशानुभवविरोधः दुःखादौसति पृथक्तदुत्पत्तिविनाशानुभवयो

मित्याह । सुखादिव्यवहारइति । स्वविषयस्यज्ञानस्वविषयज्ञानं तज्जन्यइत्यर्थः।व्यवहारत्वादिति । अर्थज्ञापनेच्छाधीनजडव्यवहारत्वादित्यर्थः तथाच स्वप्नप्रलापादिव्यवहारे सुखादिसाक्षात्कारव्यवहारे च न व्यभिचारः ननूक्तहेतोर्जनकज्ञानैकत्वंव्याप्त्यभावात्कथंतदेकत्वसिद्धिरित्यतआह । लाघवादिति । चितिकर्त्रनुमानालाघवानुगृहीताद्यथा तदेकत्वसिद्धिस्तथाव्यवहारलिंगादपिलाघवानुगृहीतात्तज्जनकज्ञानैक्यं तवकथं न सिध्येदिति भावः सुखादिसाक्षात्कारानुगतबुद्धिरपिस्वतोव्यक्तिभेदानिश्चयालाघवात्तदेकत्वे प्रमाणमितिचार्थः ननु दुःखप्रत्यक्षसमयेसुखप्रत्यक्षनाशादर्थात्तत्प्रत्यक्षभेदसिद्धेरनुभवबाध इति नेत्याह । नचदुःखादीति । किंदुः

खाद्युत्पत्त्याद्यनुभवसमयएवतत्साक्षात्कारोत्पत्त्या ह्यनुभूयते उत्तसमयांतरे नद्वितीयइत्याह । दुःखादौसतीति । यथाघटे सत्येवानं ततज्ञानस्योत्पत्त्याद्यनुभूयते नैवंसुखादौ सतितत्साक्षात्कारोत्पत्त्याद्यनुभूयतइत्यर्थः प्रथमे तु त्पादविनाशानुभवस्यदुःखाद्युपहित-प्रत्यक्षगोचरतया तद्विशेषणीभूतदुःखादेरेव स्वाभाविकनाशादिविषयत्वेनापि तदुपपत्तेर्नतद्विरोधइत्याह । दुःखज्ञानमिति । दुःखा-दिदशायामिदानींसाक्षात्कारोनेति स्वरूपेण तन्नाशानुभवात्परैर्विशिष्टनाशानभ्युपगमाच्च विशेषणीभूतदुःखादिनाशादिरेव रूपसंबंधो नष्टइत्यादीश्यामतादिनाशादिवदनुभूयतइत्यर्थः ननुदुःखाद्यनुभवएवस्वतउत्पत्त्यादिमाननुभूयते दुःखादौ तुतदुपाधिकोत्पत्त्याद्यनुभव-

रभावेनदुःखज्ञानं नष्टमि त्याद्यनुभवस्य विषयविनाशादिमात्रविषयत्वात् नचविनिगमकाभा
वः सुखाद्यनुभवदशायांदुःखाद्ययोगात्

इति वैपरीत्यंकिंनस्यादितितटस्थशंकां निराकरोति । नचेति । स्यादेतदेवंयद्यनुभवस्वरूपवत्सुखाद्यनुभवसमयेदुःखाद्यनुवर्तेत नत्वेतदपि तदातदननुभवात् दुःखादितारतम्यस्य साधनतारतम्याधीनतयास्व तएवतदुत्पत्त्यादेरावश्यकत्वाच्चेत्याह । सुखाद्यनुभवेति । ननुसिद्धांते सुखस्यनित्यत्वेपिसाधनतारतम्यादिना तदभिव्यक्तमात्रस्य तारतम्यमाश्रीयते तथादुःखादावपिकिंनस्यादित्याशंक्यानंदाद्येवखल्विमानि भूतानिजायंते यदेष आकाशआनंदोनस्यात् विज्ञानमानंदं ब्रह्मेत्यादिश्रुतिभिः परमप्रेमास्पदत्वलिङ्गेन सौषुप्तसुखानुभवेन चनित्यात्मन एवसुखत्वावधारणात् सुखस्य नित्यत्वेन तदभिव्यंजकवृत्तेरेव साधनपारतंत्र्यादियुक्तं दुःखादेस्तुनित्यत्वेन किंचिन्मानमस्तीतिस्वतएवतदु-

त्पत्त्योदिमदिति वैषम्यमभिप्रेत्याह। प्रमाणाभावाच्चेति। एवं तावज्जडात्मकं वुद्धीच्छादिगोचरसाक्षात्कारनित्यत्वे बाधकाभावमुपपाद्यत-दुत्पत्त्याद्यभ्युपगमे बाधकमाह। वुद्ध्यादिगोचरेति। वुद्ध्याद्युत्पत्तिसमनंतरमेव किंत्वयेदानीं इदं वुद्धं तन्नेदमिष्टंवेत्यादिपरेण पृष्टस्यसवो-धादीनसंशयइतिसार्वजनीनं सचानियमेन संशयाभावो ग्राह्यनिश्चयनिर्वाह्य: इतरथाग्राह्यानिश्चयादिसंशयसामग्रीसत्त्वेनतदभावानुपपत्ते: वुद्ध्याद्युत्पत्त्यनंतरंच नियमेनमानसतन्निश्चयोपगमेमानसज्ञानानवस्था स्यात् न स्याच्चेष्टानिष्टज्ञानादिना सुखदु:खाद्युत्पत्तिरतएववुद्ध्यादी-नां स्वप्रकाशत्वं कल्पतइति चेन्न लाघवेन तद्गोचरचिदात्मन एकस्यैव स्वप्रकाशत्वे तदुपपत्तौ वुद्ध्याद्यनंतकार्यस्वप्रकाशत्वकल्पने गौर-

प्रमाणाभावाच्च वुद्ध्यादिगोचरनित्यसाक्षात्कारस्यैकस्यानभ्युपगमेवुद्ध्यादेर्नियमेनमनसा ग्रहासंभवेन तद्दशायामयेदमनुभूयते नवेदानीमिदमिच्छामिनवेत्यादिसंशयःस्यात्

वात् इच्छादेरपिविषयस्यार्थप्रकाशत्वप्रसंगेन वुद्धिवैजात्यायोगाच्च तस्माद्वुद्ध्यादिगोचरमित्यसाक्षात्कार एकोभ्युपेयतइतिभाव: किंचस्वप्ने-बाह्येंद्रियाणामुपरतत्वान्मनसश्च बहिरस्वातंत्र्यात्तदागजरथादेरपरोक्षतया सर्वानुभवसिद्धतत्साधकनित्योनुभवोभ्युपेयइतिभाव: तथा स्वप्नोत्थितस्य सुखमहमस्वाप्समिति परामर्शदर्शनात्स्वापेतन्मूलानुभवोनित्योभ्युपेय: तत्र सर्वेन्द्रियाणामुपरतत्वेन सुषुप्तिभंगप्रसंगेन नहि द्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइति श्रुत्याचानित्यज्ञानायोगात् ततश्च मनोग्राह्यतयाशंक्यमानसमस्तभावाभावसाक्षिणोवस्थात्रयानुयायि-नोनित्यानुभवादेव सर्वव्यवहारसिद्धेर्नक्वापिमन: प्रमाणमित्युपसंहरति । ततश्चेति । मनसोकरणत्वेमनसेदंपश्यामीत्यनुभवोमनसाह्येव- १०

पश्यतीतिश्रुतिश्च विरुद्धेयातामित्याशंक्याह । मनसेदमिति । मनसेदं पश्यामीत्यनुभवोपि शब्दोपात्तोक्तश्रुतिश्च न विरुध्यत इत्यन्वयः तत्र-
हेतुः । मनसेति । अयसि दग्धत्वारोपे यथाग्निर्निमित्तं तथात्मनि प्रमातृत्वारोपे तदुपादानस्यापि मनसो निमित्तत्वान्मनसा पश्यामीत्यादि-
व्यवहार इत्यर्थः ननु अनुभवानुरोधाद्बुद्ध्यादौ मनसः करणत्वमेव किं न स्यादित्याशंक्य तस्य ज्ञानाद्याश्रयत्वस्यानन्यथासिद्धानुभवागमा-
भ्यामवसितत्वान्मनसः प्रमातृत्वमेवोपेयमित्याह । तदावयोरिति । तदिति ज्ञेयमुच्यते आवयोर्मन इति प्रत्येकं मनः परं त्वन्मनो मन्मनश्च-

ग्राह्यनिश्चयव्यतिरिक्तसंशयसामग्र्यसिद्धत्वात् ततश्चावस्थात्रयानुयायिनो दुःखादिसाक्षात्कार
स्य नित्यत्वान्न तत्र मनः करणं मनसेदं पश्यामीत्यनुभवोपि तदावयोर्मनो जानातीत्यनु
भवात्कामः संकल्प इत्यादिश्रुत्या च दर्शनाद्युपादानस्य मनस आत्मनि दर्शनाद्यारोपनि
मित्तत्वान्न विरुध्यते व्यासंगस्त्वात्मनि परस्य क्रमज्ञानजननशक्त्यान्यथा चोपपद्यत इति न ततो

जानातीत्यर्थः यदप्यवादि व्यासंगानुपपत्त्या बाह्यविषयज्ञानकरणं मन इति तत्परमतेऽन्यथैवोपपत्त्या निराकरोति । व्यासंगस्त्विति । चोवधा-
रणे परमते हि प्रथमज्ञानसमये धारावाहिकद्वितीयादिसमस्तज्ञानसामग्र्यां सत्यामप्यात्मनि क्रमजननशक्त्यैव ज्ञानज्ञानोत्पादक्रमस्य निर्वाह्य-
त्वादन्यथा धर्मधर्मिकल्पनागौरवात्ततश्च तथैव व्यासंगोपपत्तौ न क्रमजननशक्तिमन्मनः करणं कल्प्यमित्यर्थः सिद्धांते न बुभुत्साघटितज्ञानांतर-
सामग्रीप्राबल्येन तत्प्रतिबंधादेव युगपत् श्रोत्रसमवेतानेकशब्दाग्रहणवत् क्वचिन्मनः संकोचादिंद्रियसंयोगाभावाद्वा व्यासंगोपपत्तिरिति भावः

किंच यद्यहमनुभवगोचरोहंकारएवात्मा स्यात्तर्हि तदतिरिक्तं पराभिमतज्ञानकरणं मनः सिध्येदपि नत्वेनदस्तिश्रुतिस्मृतिन्यायैरहंकारानात्मतया वक्ष्यमाणत्वात्तस्यैव ज्ञानाद्याश्रयतयानुभूयमानस्यात्मनि स्वधर्मारोपनिमित्तत्वेनांतः करणपदाभिलप्यस्य ज्ञानाद्युपादानत्वेन तत्करणत्वायोगन्नक्वापि प्रमाणत्वं तस्येत्याह। किंचाहमितीति। एवमप्रमाणंमनइत्येतदुपपाद्यासक्तमित्येतत्प्रपंचयति। किंच मनइति। भेदेन·

पिमनः करणं किंच अहमित्यनुभवस्यांतः करणविषयत्वंवक्ष्यते ततश्चाहंजानामीत्यहंकार धर्मतयाअनुभूयमानंज्ञानादिकंतद्धर्मएवेतिनतत्रमनःकरणमितितत्रभदेप्रमाणम्। किंच मनोनभेदेप्रमाणं तदसन्निकृष्टत्वात् सम्मतवत् नवासिद्धिः संयोगादेर युक्तत्वात्तदन्यस्याप्रसिद्धितः सन्निकर्षस्यतेनेदंभेदासंग्येवमानसम् ॥८॥ मनसोभेदेनसंयोगसमवायतादात्म्यानामन्यतमोनेतिसुप्रसिद्धं नचान्यइंद्रियसन्निकर्षोस्तिनचा

प्रत्यक्षप्रमाणमित्यर्थः ततोनानुमानादौ हेतोर्व्यभिचारः तत्रापि व्याप्त्यादिसन्निकर्षसत्वाद्यथाश्रुतंवासाध्यमस्तुआत्मगतभेदं मनःप्रमाणमिति वदंतं प्रतितंनासन्निकृष्टत्वादितिहेतुरसिद्धइत्याशंक्य सन्निकर्षस्य निरूपयितुमशक्यत्वान्नैवमित्याह । नवेति । किंमनोभेदयोः संयोगसमवायतादात्म्यानामन्यतमः सन्निकर्षस्तदन्योवा नाद्यः वक्ष्यमाणविधया तदसंभवात् नद्वितीयः तदन्यसन्निकर्षस्य क्वाप्यप्रसिद्धेः ११

तेन नासिद्धोऽहेतुरित्यर्थः श्लोकं विवृणोति । मनसइति । तदसन्निकृष्टत्वादितिहेतोरप्रयोजकत्वं निराकरोति । नचासन्निकृष्टमिति । हेतु-
त्वादित्यत्र सन्निकर्षाभावे मनसस्तज्जनकत्वानुपपत्तेरितिशेषः ननु विशेष्यसन्निकर्षो विशेषणासंसर्गाग्रहश्च विशिष्टप्रत्यक्षहेतुर्नविशेषणस-
न्निकर्षः भेदश्चायमस्माद्भिन्न इति विशेषणतयैव भातीति चेन्न लाघवेन यावद्विषयसन्निकर्षस्य तद्धेतुत्वे नविशेष्यसन्निकर्षत्वेनाहेतुत्वात् किं-
च पर्वतादावसत्यपिवह्न्यादिसन्निकर्षे वह्निमानयंपर्वतइत्यादिप्रत्यक्षप्रसंगः नच विशेषणोपस्थितिरपि विशिष्टबोधहेतुरितिवाच्यं एवम-
पि परमते गृहीतव्याप्तिकस्यवह्न्यादावपि तत्सत्त्वाद्वेदे च निर्विकल्पकरूपायाः सविकल्पकरूपाया वा विशेषणोपस्थितेर-

सन्निकृष्टमर्थमिंद्रियं गृह्णाति विशेषण विशेष्येंद्रियसन्निकर्षस्य जन्यप्रत्यक्षमात्रेहेतुत्वात्
न च भेदस्यविशेषणतासन्निकर्षइतिवाच्यं व्यवहितप्रदेशेप्यभावग्रहणप्रसंगात् नचाधिकर
णेंद्रियसन्निकर्षोपि कारणमितिवाच्यं परमतेशाब्दाभावस्याप्रत्यक्षप्रसंगात्

नुपपत्तेः सन्निकर्षंविना तदयोगात्तचानुमानादेर्निराकरिष्यमाणत्वात्परोक्षोपस्थितेरप्यसंभवादितिभावः ननु भेदस्यान्योन्याभावात्म-
कत्वादभावे च विशेषणतायाः सन्निकर्षत्वादसन्निकर्षासिद्धिरिति । नचभेदस्येति । किमभावस्य विशेषणतामात्रं सन्निकर्षः इंद्रि-
यसन्निकृष्टाधिकरणविशेषणता वा किंवायत्राधिकरणेप्रतियोगिसत्त्वमनुपलब्धिविरोधिस्यात्तद्विशेषणता नतावदाद्यः कल्पोवा कल्प्यते
कुड्यादिव्यवहितभूतलादिनिष्ठघटाद्यभावेपि विशेषणतामात्रस्य सत्त्वेन प्रत्यक्षत्वप्रसंगादित्याह । व्यवहितेति । नद्वितीयइत्याह । नचा-

धिकरणेति । परमते कर्णबलयावच्छिन्ननभस एव श्रोत्रेंद्रियत्वात्तस्यैव स्वग्राह्यशब्दाभावाधिकरणत्वात्स्वेन स्वस्यासन्निकर्षात्तदधिकरणेंद्रिय-सन्निकर्षाभावेन शब्दाभावे प्रत्यक्षत्वं न स्यादित्यर्थः तृतीयं निराकरोति । नचयत्रेति । प्रतियोगिसत्त्वस्यानुपलब्धिविरोधित्वं नाम उप-लभ्यमानत्वं तस्य किंयदाकदाचिद्भावोपेक्षत उत नियमेन आद्ये व्यवहितेप्यभावाधिकरणे कदाचिदुपलंभसंभवात्प्रतियोगिनस्तत्र व्यव-धानसमग्रेप्यभावः प्रत्यक्षः स्यादित्याह । कदाचिदिति । द्वितीयस्त्वयुक्तइत्याह । नियमेनेति । श्रोत्रदेशभूतलादौवा शब्दस्य घटादेर्वा सत्त्वेपि सामग्र्यभावादिनानुपलंभसंभवेन नियमेन तदुपलंभायोगात्तत्र तदभावोन प्रत्यक्षः स्यादित्यर्थः विशेषणतायाः क्वचिदिंद्रियप्र-

न च यत्रप्रतियोगिनः सत्त्वमनुपलब्धिविरुद्धं तद्विशेषणता भावस्यैंद्रियप्रत्यासत्तिरितिवाच्यं कदाचिदुपलंभस्य व्यवहितदेशस्थ घटादेरपि सत्त्वात् नियमेनोपलंभस्य शब्दादेरप्यभावात् विशेषणताया इंद्रियप्रत्यासत्तित्वे प्रमाणाभावाच्च अनुपलब्धिमात्रादप्यभावज्ञानोपपत्तेः ज्ञानाकरणक

त्यासत्तित्वमुपेत्यैतदुक्तं संप्रत्यंगीकृतं परित्यजति । विशेषणतायाइति । ननुकादाचित्काभावानुभवस्य करणसापेक्षत्वात्तच्चेन्द्रियातिरिक्त- १२
करणासंभवात्तस्य च प्रत्यासत्तिं विना करणत्वायोगात्परिशेषाद्विशेषणता तत्र प्रत्यासत्तिरित्याशंक्य तत्र करणांतराभावोसिद्धइत्याह अनुपलब्धिमात्रादिति । मात्रचाकरणांतरं व्यावर्त्यते न चैवं भेदस्यानुपलब्धिप्रमाणकत्वे षष्ठप्रमाणवादिनामिष्टमेवसिद्धमिति वाच्यं त-च योग्यानुपलब्धेरप्यनंतरमेव निराकरिष्यमाणत्वादितिभावः नन्वभावज्ञानस्य ज्ञानाकरणकज्ञानत्वेन प्रत्यक्षत्वानुमानादिन्द्रियजन्य-

त्वं दुर्वारमित्याशंक्याह। ज्ञानाकरणकस्येति । परमते स्मृतिरूपपरामर्शजन्यानुमितौ ज्ञानस्य करणत्वासंभवान्मनएव वा परामर्श प्रागभावोवा नुमितौज्ञानद्वाराकरणमितिकैश्चिदभ्युपगमात् ज्ञानाकरणिकाया।अप्यनुमितेः परोक्षत्ववत्सिद्धांतेपिसंस्कारकरणिकायाः स्मृतेः परोक्षत्ववच्चाभावज्ञानस्यापि परोक्षत्वोपपत्तेः नेंद्रियजन्यतेत्यर्थः घटाद्यभावानुभवस्य चक्षुराद्यजन्यत्वेतदन्वयव्यतिरेका-नुविधानमात्रमाशंक्यशब्दे तरेंद्रियग्राह्यप्रतियोगिकाभावस्येंद्रियेणाधिकरणग्रहणा सत्यत्रानुपलंभेन ग्रहणात्तदन्वयव्यतिरेकयोरन्यथासि-द्ध्या न विरोधइत्याह । क्वचिदिंद्रियेति । शब्दाभावस्तु सतिप्रतियोगिज्ञाने योग्यानुपलब्धित एव गृह्यत इति न तद्ग्रहे श्रोत्रंहेतुः

स्यापि मनःकरणकानुमिंति वदप्रत्यक्षप्रसंगात् क्वचिदिंद्रियव्यापारस्यापि अधिकरणग्रहएवोपक्षयात्
न च प्रमाणांतरकल्पनागौरवम् त्वयापि तस्या अभावज्ञाने निमित्ततया अभ्युपेतत्वात्

साक्षिमात्रग्राह्यप्रतियोगिकाभावस्तु तत्प्रतियोगिविरोधिसत्त्वलिंगेन वा साक्षिणैव वा गृह्यते अभावस्यापिसाक्षिमात्रभास्यत्वमुक्तमा-चार्यैः स्वप्नजागरितेसुप्तिं भावाभावौधियांतथा योवेत्त्यविक्रियः साक्षीसोहमित्यवधारयेति ततश्च क्वचिदपीन्द्रियस्याभावधीहेतुतैव नेति भावः नन्विन्द्रियस्यान्यथासिद्ध्यापादनेनानुपलब्धेरेवाभावानुभवकरणत्वाभिधानेनुपलब्ध्याख्यप्रमाणांतरकल्पनागौरवप्रसंगेनेत्या-ह । नचप्रमाणांतरेति । हेतुमाह । त्वयापीति । अभावस्येंद्रियग्राह्यत्ववादिनाप्यनुपलब्धेस्तद्ग्रहेनिमित्तत्वोद्गमात्तस्यास्त्वत्रासाधारण निमित्ततया करणत्वमप्यनुक्तसिद्धमेवेति नास्माकमधिककल्पनीयमस्ति न च व्यापाररहितायाअनुपलब्धेरभावग्रहे करणत्वमनुपपन्न-

मिति वाच्यम् । परमतेपि शब्दप्रागभावादिग्रहे श्रोत्रस्य व्यापाराभावेनाकरणत्वप्रसङ्गात् व्यापाराभावेपि केनचिदतिशयेन साधकतमत्वात्करणत्वमनुपलब्धावपि तुल्यमिति भावः स्वमते कल्पनागौरवं परिहृत्य परमते तत्प्रसङ्गो दुर्वार इत्याह । विशेषणताया इति । ननु समवायस्याद्रव्यस्येन्द्रियेण संयोगायोगात्स्व [ समवायेसमवायवृत्तित्वविरोधः ] वृत्ति त्व विरोधेन समवायासंभवाच्च विशेषणताया एव प्रत्यासत्तित्वं क्लृप्तमित्यभावेपि तस्यास्तदुत्पत्तौ नापूर्वाधिककल्पनेत्याशङ्क्य प्रमाणाभावात्समवाय एव तावदसिद्धः तच्च विशेषणताप्रत्यासत्तित्वं सुतरामसिद्धमित्यभिप्रेत्याह न चसमवायेत्यादिना ननु रूपी घट इत्यादि विशिष्टप्रत्ययस्य दंडादिप्रत्ययवत्संबन्धिद्वयातिरिक्तवैशिष्ट्यविषयत्वावधारणात् गुणादौ च संयोगासंभवात्परिशेषात्समवायसिद्धिरिति चेन्न गुणगुणिनोरवयवावयविनोश्चात्यं-

## विशेषणताया अपि इंद्रियप्रत्यासत्तित्वज्ञानहेतुत्वयोः कल्प्यत्वात् न चसमवायप्रतीतौ

तभेदे तत्संबन्धस्य च ताभ्यामत्यन्तभेदे दंडपुरुषादाविव शुक्लः पटः सुवर्णं कुण्डलमित्यादिसमानाधिकरणप्रत्ययानुपपत्तेः किंच समवायस्य संबन्धिभ्यामसंबद्धस्यैव विशिष्टप्रत्ययनियामकत्वेतिप्रसङ्गात्तत्रापि संबन्धान्तरोपगमे ऽनवस्थाप्रसङ्गात्तत्रापि तत्स्वरूपसंबन्धस्य च निरशिष्यमाणत्वात्तस्य च क्व विशिष्टधीनियामकत्वे गुणगुण्यादावपितस्यैव नियामकत्वोपपत्तौ समवायकल्पनाच्च किंच समवायस्यैकत्वे रूपज्ञानादिसमवायस्य वायुघटादिवृत्तिसमवायादभेदाद्रूपी वायुः घटो जानातीत्यादिधीप्रसङ्गः न च वायादौ रूपादिसमवाये सत्यपि रूपादेरभावान्न तद्विशिष्टधीरिति वाच्यं तद्वृत्तित्वप्रयोजकसंबन्धे सति तदभावव्यवहारस्य व्याहतत्वात् समवायनानात्वकल्पनात्वतिजघन्यत्वाद्धेयमेवं मृद्घटादेरत्यन्ताभेदेप्यपुनरुक्तशब्दद्वयावगाहिसमानाधिकरणप्रत्ययानुपपत्तिः कार्यकारणभावाद्यनुपपत्तिश्च त- १३

स्यात्तादात्म्यमेवावयव्यादीनां संबन्धः तच्च न भिन्नाभिन्नत्वं विरुद्धयोर्भेदाभेदयोरेकत्वासंभवात् अविरोधे च भेदाविरुद्धेऽभेदसंज्ञायाः पारिभाषिकत्वेनात्यंतभेदवादिमताविशेषायोगात् किन्तु भिन्नत्वे सत्यभिन्नसत्ताकत्वं तादात्म्यं तच्चानिर्वचनीयं स एव च समानाधिकरणगोचर इति न समवायः प्रामाणिक इति भावः ननु शुक्तौ घट इत्यादिरूपेण तादात्म्यस्यापीन्द्रियग्राह्यत्वात्तच्च प्रत्यासत्त्यन्तराभावाद्विशेषणतायाः प्रत्यासत्तित्वं दुर्निवारमिति नेत्याह । तादात्म्ये चेति । अभिन्नसत्ताकसंबन्धिद्वयाभिव्यक्तसाक्षिमात्रभास्यत्वस्य शुक्तिरजततादात्म्यादौ क्लृप्तत्वाद्गुणगुण्यादितादात्म्यस्यापि साक्षिमात्रभास्यत्वसंभवादिन्द्रियस्य च संबन्धिग्राहकत्वस्यैवान्यथा सिद्धसंबन्धि

## ततक्लृप्तमितिवाच्यं तदसंप्रतिपत्तेः तादात्म्ये च न प्रत्यासत्त्यंतरमपेक्ष्यते तस्य साक्षिभास्यत्वात् निरवयवात्मनो मनसः संयोगासंभवाच्चनभेदस्यैंदियसन्निकृष्टत्वंएकत्रसंयोगतद

प्रत्यासत्त्यतिरिक्तप्रत्यासत्तेस्तादात्म्येऽनपेक्षणाद्विशेषणता न तत्रापि प्रत्यासत्तिरिति भावः किञ्च विशेषणतामात्रस्यातिप्रसक्तत्वेनेन्द्रियप्रत्यासत्तित्वायोगादिन्द्रियसंयुक्तत्वादिघटितायास्तस्याः प्रत्यासत्तित्वं वाच्यं संयोगस्य च प्रदेशवृत्तित्वनियमान्निरवयवे आत्मनि च मनःसंयुक्तत्वासंभवात्तद्गते च भेदे मनःसन्निकर्षाभावात्तदग्राह्यत इत्याह । निरवयवात्मनीति । निरवयवे संयोगः किमव्याप्यवर्तते उत व्याप्य नाद्यः निरवयवे संयोगस्य स्वात्यन्ताभावसमानाधिकरणत्वातिरिक्ताव्याप्यवृत्तित्वस्यानिरूपणात्तस्य चे भावाभावयोरेकत्र विरोधेनासंभवादविरोधे वा विरोधवार्तायाः सर्वत्रोच्छेदप्रसङ्गात्तयोरविरोधे नियामकाभावेन व्याप्यवृत्तित्वापाताच्चेत्यभिप्रेत्याह । एकत्रेति । ननु

भावान्तराणां स्वाभावसामानाधिकरण्यविरोधेऽपि संयोगादीनां तदविरोधः एकस्मिन्नेव वृक्षादौ कपिसंयोगतदभावयोः सर्वानुभवसिद्धत्वादिति नेत्याह । वृक्षादावपीति । वृक्षस्य स्वत एकत्वेऽप्यग्रमूलाद्यवयवभेदाधीनभेदवदौपाधिकभेदवतोरेवाग्रवृक्षयोः संयोगतदभावाधिकरणत्वादेकाधिकरणत्वं भावाभावयोः सर्वत्र विरुद्धमेवेत्यर्थः एकस्मिन्नप्यौपाधिकभेदं साधयति । अग्रेवृक्ष इति । न च मूले कपिसंयोगवान्नेत्यनुभवात्संयोगात्यन्ताभाव एव प्रतीयते नतु संयोगवद्वृक्षभेद इति वाच्यं संयोगिनः प्रतियोगित्वानुभवविरोधात् विशिष्टप्रतियोगिकभेदप्रतीतेर्विशेषणाभावविषयत्वे घटः पटो नेत्यादिभेदप्रतीतेरपि घटादौ पटत्वाद्यभावविषयत्वोपपत्तेर्भेदोदत्तजलाञ्जलिः

भावयोरयोगात् वृक्षादावप्यौपाधिकभेदवत्येवतदुभयप्रतीतेः अग्रेवृक्षः कपिसंयोगवान्मूलेनेत्यनुभवात् नचपरमतेतदभेदतद्भेदश्चसंभवति सिद्धांतेचकल्पितप्रदेशवृत्तिसंयोगस्यप्रमाहे

स्यात्तर्ह्येकस्मिन्नात्मन्यप्यौपाधिकभेदेन मनःसंयोगतदभावौ स्तामित्याशङ्क्याह । न च परमत इति । भेदाधिकं वास्तवमिति मते तदभिन्ने तस्मिन्वास्तवभेदायोगादत्यन्तभेदवादिरव्याप्यवृत्तिभेदानङ्गीकाराच्चेति भावः ननु परमते निरवयवात्मनि संयोगासंभवेऽपि सिद्धान्ते तत्तदुपाधिपरिकल्पितात्मप्रदेशभेदेन मनःसंयोगसंभवात्तन्निमित्तो जीवपरभेदः प्रमाणं स्यादित्याशङ्क्याह सिद्धान्ते चेति । मिथ्याभूतप्रदेशसापेक्षस्य मनःसंयोगस्यापि मिथ्यात्वात्तस्य वाष्पधूमादिवत्प्रमापकत्वं न संभवति न चैवं सति वेदान्तानां प्रमापकत्वानुपपत्तिरिति वाच्यं तेषां स्वरूपेण कल्पितत्वेऽप्यर्थक्रियासमर्थत्वादपौरुषेयतया निरस्तसमस्तकलङ्काशङ्कानां स्वार्थे बाधकाभावेन यादृच्छिकसंवादिलिङ्गविभ्रमवत्प्रमापकत्वोपपत्तेः भेदज्ञानस्य तु कल्पितसामग्रीप्रसूतत्वाच्छुक्तिन्यायापहृतविषयत्वाच्च प्रमात्वमनुपपन्नमिति भावः

ननु संयोगतदभावयोर्नाधिकरणभेदनियमः तयोरवच्छेदकभेदेनैकत्राप्यविरोधादेकस्मिन्नपि वृक्षादावग्रत्वमूलत्वाद्यवच्छेदकभेदात्क-
पिसंयोगादिदर्शनादात्मन्यपि शरीराद्यवच्छेदकभेदान्मनः संयोगाद्युपपत्तेर्नेत्याह । नचैकस्मिन्निति । अग्रत्वदः संयोगाधिकरणता-
वच्छेदकत्वं नाम किं तदभाववदवृत्तित्वे सति तदाश्रयवृत्तित्वमुत तदाश्रयवृत्तित्वमात्रं नाद्यः संयोगतदभावयोरधिकरणभेदाभावे संयो-
गाधिकरणस्यैव तदभावाधिकरणत्वाश्रयत्वात् संयोगाधिकरणत्वाश्रयवृत्त्यग्रत्वादेस्तदभाववदवृत्तित्वायोगादित्याह । अधिकरणेति । न द्वि-
तीयः अतिव्याप्तेरित्याह । तदधिकरणेति । एवं निरवयवे संयोगस्याव्याप्यवृत्तित्वं निराकृत्याधुनाव्याप्यवृत्तित्वकल्पं निराकरोति सं-
तुत्वं न संभवति नचैकस्मिन्नप्यवच्छेदभेदादेव भावाभाववृत्तिरितिवाच्यं अधिकरणभेदाभावे तदभा-
ववदवृत्तित्वघटितावच्छेदकत्वस्याग्रत्वादेरयोगात् तदधिकरणवृत्तित्वस्य प्रमेयत्वादिसाधार
ण्यात् संयोगस्य व्याप्यवृत्तित्वमननुभवपराहतमसंभवि च तथात्वे शब्दादेः सर्वत्रप्रतीतिप्र-
15 योगस्येति । किं सर्वस्य संयोगस्य व्याप्यवृत्तित्वमभिमतम् उत्तरनिरवयववृत्तिः नाद्यः स्थाणुसंयोगानां व्याप्यवृत्तित्वस्यानुपलब्धिपराहतत्वादसं-
भवाच्च न द्वितीयः परमते परमाणुसंयोगस्य परमाणुत्वरव्यापित्वे द्व्यणुके प्रथिमानुपपत्तेः किं च परिच्छिन्नापरिच्छिन्नद्रव्यसंयोगस्य परिच्छि-
न्नव्याप्यत्वेऽप्यपरिच्छिन्नव्याप्यत्वादर्शनादन्यथा नीरक्षीरवदुभयोरपि समव्याप्तिः स्यादिति भावः संयोगस्य व्याप्यवृत्तित्वे बाधकान्तरमाह
तथात्वे इति । कर्णनलयसंयोगावच्छिन्ननभस एव परमते श्रोत्रेन्द्रियतया शब्दग्राहकत्वांगीकारात्तत्संयोगस्य च नभोमात्रव्यापित्वे कृ-
त्स्नस्य नभसः श्रोत्रत्वापातेन तन्निष्ठानां सर्वेषां शब्दतदभावानामुपलंभप्रसङ्गात् निमित्तसंयोगावच्छेदेनोत्पद्यमानशब्दस्याव्याप्यवृत्तित्व

भ॰
धि॰
१५

च न स्यात् अतएव कर्णगोलकस्य सर्वत्राभावान्न सर्वशब्दोपलब्धिरिति निरस्तं तथापि व्यापिसर्वशब्दोपलंभस्य दुर्वारत्वात् गोलकसंयोगस्य रूपज्ञाने व्यभिचारेण सतीन्द्रियसन्निकर्षे केवलव्यतिरेकाभावेन हेतुत्वायोगाच्चेति भावः मनो न भेदे प्रमाणं तदसन्निकृष्टत्वादित्येतदुपसंहरति । तस्मादिति । अयोग्यानुपलब्धिकमित्येतद्विवृणोति । नापि मनस इति । उपलब्धुं प्रत्यक्षेणावगंतुं योग्यस्य प्रतियोगिनोऽनुपलंभो योग्यानुपलंभः सोभावरूपभेदग्राहकेन्द्रियस्य सहकारीवक्तव्यः स मनसेश्वरभेदग्रहे न संभवति तत्प्रतियोगिन ईश्वरस्य प्रत्यक्षायोग्यत्वादित्यर्थः ननु योग्यत्वमनुपलब्धेरेव विशेषणं तच्चानुपलब्धेस्तद्ग्राह्याभावप्रतियोगि तद्व्याप्येतरसकलतदुपलंभककालीनत्वमेवे-

संगाच्च तस्यान्न मनसोभेदेन संबंधः नापि मनसः सहकारियोग्यानुपलंभोस्ति ईश्वरस्य च प्रत्यक्षायोग्यत्वात् प्रत्यक्षयोग्यस्यानुपलब्धिर्हि योग्यानुपलब्धिः प्रतियोगितद्व्याप्येतरसकल तदुपलंभककालीनानुपलब्धित्वस्यात्रासंभवात् घटेमनस्त्वंनास्तीति ज्ञानं च परमाणुत्वं ना

ति नवीनोत्प्रेक्षितमाशङ्क्य प्रतियोगिप्रत्यक्षज्ञानजनकस्य तदुपलंभकपदाभिलप्यत्वात्तत्प्रत्यक्षत्वमभावप्रत्यक्षत्वे तंत्रं स्यादित्युक्तदोषा १५
निरस्ता इत्याह । प्रतियोगीति । प्रतियोगिनो प्रत्यक्षत्वेप्यभावप्रत्यक्षत्वदर्शनात् प्रतियोगिप्रत्यक्षत्वं तत्र न तंत्रमितिप्रागुक्तं निराकरोति । घटेमनस्त्वमिति । यद्यपि पराभिमते परमाणुत्वोपाधेर्धर्मिप्रत्यक्षत्वेन प्रत्यक्षत्वमापादयितुमशक्यं मनस्त्वस्यतुजातित्वात्तदापादनं सुकरमिति पराभिमानस्तथापि तदुभयाभावेपि साक्षात्करोमीत्यनुभवाभावेन तदप्रत्यक्षत्वमेवयुक्तं नहि परोत्प्रेक्षितसामग्रीमा-

क्षान्मनस्त्वाभाव एव प्रत्यक्ष इति स्वीकारो युक्तोऽनुपलब्धिविरोधादिति भावः घटे मनस्त्वाभावस्याप्रत्यक्षत्वे हेत्वन्तरमाह । नहिमनस इति । घटस्य मनसः सकाशाद्भेदाप्रतिसंधानदशायां घटे मनस्त्वसंशयविपर्यययोरन्यतरापातेन घटे तदभावनिश्चयायोगात् घटमनसो-भेदनिश्चयदशायामेव घटे मनस्त्वाभावानुभवो वाच्यः तदा च भेदप्रतियोगितावच्छेदकमनस्त्वाभावस्य तद्धर्मिण्यार्थिकत्वान्न प्रत्यक्षकल्प-इति भावः भेदप्रतिसंधानदशायां भेदप्रतियोगितावच्छेदकधर्माभावस्य भेदधर्मिण्यार्थिकत्वे गमकमाह । अत एवेति । परमते परमा

**स्तीति ज्ञानवन्नप्रत्यक्षं नहि मनसो घटे भेदाप्रतिसंधानदशायां तदनुभवोस्ति अतएवातीन्द्रियेघटत्वाभावो न प्रत्यक्षः न च नाहमीश्वर इति भेदप्रतीतिदशायामीश्वरोपलंभकसमवधानमस्तितत्कालीनमन आदेस्तदयोग्यत्वात् यत्तुयत्र यत्सत्त्वमनुपलब्धिविरोधीत्यादियोग्या**

णवादौ घटत्वाद्यभावस्य प्रतियोगि तद्ग्राह्येतरसकलतदुपलंभकसमवधानेपि प्रत्यक्षत्व नोपेयते तत्कस्य हेतोः तथानुभवाभावाद्घटपर-माणवादीनां भेदे प्रतिसंधानदशायामेव परमाणवादौ घटत्वाद्यभावानुभवेन तत्र तस्यार्थिकत्वोपपत्तेश्च एवं प्रत्यक्षेपि धर्मिण्यतीन्द्रियध-र्माभावः परोक्ष एवेत्यर्थः एवमतीन्द्रियप्रतियोगिकात्यन्ताभावग्रहे योग्यानुपलंभं निरस्य तदन्योन्याभावरूपेश्वरभेदग्रहेपि स नास्तीह न च । नाहमीश्वर इति । तत्र हेतुः तत्कालीनेति भेदधीपूर्वक्षणे सतोपि मनश्चक्षुरादेरतीन्द्रीयेश्वरग्रहायोग्यतयाप्रतियोग्युपलंभकाभावा-न्नतत्र विवक्षितयोग्यानुपलंभ इत्यर्थः इदानीं नवीनतरोत्प्रेक्षितमनूद्यदूषयस्तित्यादिना साक्षादभावविरोधित्वं प्रतियोगिन एव अन्यस्य

तु तत्प्रतियोग्यव्याप्यतेति सर्वत्र स्थितिः तथा च प्रतियोग्यसत्त्वस्यानुपलब्धिविरोधित्वं तत्प्रतियोग्युपलब्धियाप्यत्वेनैवेति वक्तव्यस् एवं चान्यत्र प्रतियोगिसत्त्वस्याभावस्थलीयोपलंभाव्याप्तत्वेन तत्रत्यानुपलंभविरोधित्वायोगात् यत्र यत्सत्त्वमित्यादिवदताऽभावाधिकरण एव प्रतियोग्यसत्वमुपलंभश्च वाच्यः ततश्च नाभावधीसंभव इति वरघाताय कन्यावरणमिति न्यायापात इति भावः। ननु यत्र यत्सत्त्वमित्यत्र तर्कितमिति विवक्षितत्वादभावाधिकरणेन प्रतियोगिसत्त्वाद्यापात इति शंकते। तर्कितमिति। तर्कितप्रतियोगिसत्वस्यापि तत्र सत्त्व-

नुपलब्धिनिर्वचनं तदसत् यत्र कुत्रचित्प्रतियोगिसत्त्वस्यान्यत्रोपलंभाव्याप्तत्वेनाभावदेशीयं तत्सत्त्वंतद्व्याप्यंवक्तव्यं तच्च न संभवति अभावाधिकरणे प्रतियोगिवैशिष्ट्यसत्वे भावप्रमानुपपत्तेःतर्कितं न तद्विरोधीति चेत्तर्कितस्यापि सत्वासत्त्वान्यतरत्वात् तत्रासदप्यन्यत्रसदिति चेत्तर्हि तत्रैव तदनुपलब्धिविरुद्धानाभावाधिकरणे क्वचिदनुपलंभविरोधेनान्यत्राभावानिरूपणे अ-

मसत्त्वं वा वक्तव्यं परमते प्रकारान्तराभावात् तत्राद्ये पूर्वोक्तदोषानिस्तारः द्वितीये तु सतोनुपलब्धिविरोधत्वमसंभवीत्यभिप्रेत्य दोषयति तर्कितस्यापीति। ननु प्रतियोगिवैशिष्ट्यस्यान्यत्र सत्त्वादनुपलब्धिविरोधित्वमभावाधिकरणे वा सत्त्वादनुपलंभश्च ततश्चाभावधीरिति शं-
कते। तत्रासदपीति। किमभावाधिकरणे प्रतियोगिवैशिष्ट्यस्यानुपलब्धिविरोधित्वमभावप्रत्यक्षत्वे प्रयोजकमुतयत्र कुत्रचित्तदाद्यसंभ-
वेन निराकरोति। तर्हीति। द्वितीयमतिप्रसंगेन दूषयति। क्वचिदनुपलंभेति। किंचास्मिन्पक्षे तीन्द्रियेश्वरादितादात्म्यस्य कुत्राप्यनुपलंभ-

17

विरोधित्वाभावात्तदभावरूपो भेदो न प्रत्यक्षः स्यादिति द्रष्टव्यमभावाधिकरणे प्रतियोगिवैशिष्ट्यस्यासत्त्वेपि तदुपलंभकस्य सत्त्वादनुपल-
ब्धिविरोधित्वमित्याशंक्यासतः समस्तसामर्थ्यविकलतया तदधीनं किमपि न संभवतीत्याह। अभावाधिकरण इति। किंचिद्व्याप्यादि तत-
स्याव्याप्येन तेन न किंचिदापादनीयमिति भावः नन्वभावाधिकरणे प्रतियोग्यवैशिष्ट्यस्यासासतः स्वरूपेणानुपलब्धिविरोधित्वं न ब्रूमो येनो-
क्तदोषः स्यात्किंतु तत्र तस्यारोपितस्याप्रतियोग्यनुपलंभाभावरूपोपलंभापादकत्वेन ततश्च तत्र तर्कितप्रतियोगिसत्त्वेनापादनयोग्योपलं-
भाभाव एव योग्यानुपलंभ इति नवीनतमानां कल्पनां निराकरोति। न च यत्रेति। आपादनेनारोपेण अभावाधिकरणे प्रतियोगिस-

**तींद्रियेपिघटाभावः प्रत्यक्षःस्यात् अभावाधिकरणे सत्प्रतियोग्यवैशिष्ट्यम सत्त्वादेव नानुप**
**लंभविरोधि न चासताकिंचिन्निरूप्यते न च यत्र यत्सत्त्वापादनेनानुपलंभाभाव आपादयि**
**तुं शक्यते तत्रतदभावः प्रत्यक्ष इतिवाच्यं असता आपादितेन वैशिष्ट्यतान्यपादनायोगात्**

त्त्वस्याविशेषान्न तदुपलंभापादकत्वं क्वचिदपि संभवति अतस्तच्छक्तिरपि नेह। असतेति। न चैवं सति वह्न्यभावेनापादितेन पर्वतादौ
धूमाभावापादनमपि न स्यादिति वाच्यं तत्रापि वह्न्यभावविकल्पे सति धूमाभावविकल्पमात्रोदयो न कस्यचिदापादकत्वाद्यस्ति न
चानिर्वचनीयवादिना तदुपपादनीयमिति भावः किंच अभावाधिकरणे प्रतियोगि तद्व्याप्येतरसकलतदुपलंभकसामग्र्यां सत्यामपि किं
तत्र तत्सत्त्वमापादितं तदुपलंभापादकमित्यभिमतं किं वा तद्वैशिष्ट्यमात्रं तत्रापादितं तदुपलंभापादकमिति नाद्यः दृष्टादृष्टसमुदाया-

त्मकसामग्र्याः कार्यैकगम्यतया तदभावे दुर्ग्रहत्वात्तद्ग्रहाभावे वान्धकारादावतद्देश इव सहकारिवैकल्यादनुपलंभोपपत्तिशंकया तर्कित-
स्यापि प्रतियोगिनः स्वोपलंभापादकत्वायोगादतीन्द्रियोपलंभकाभावेन तदभावस्य प्रत्यक्षत्वायोगाच्च त्वतदतिस्पष्टमित्यभिप्रेत्य द्वितीयं
दूषयति । प्रतियोगिवैशिष्ट्यमात्रेणेति । आरोपितेनेति शेषः घटवति देशेपि तत्सत्तामात्रेण तदुपलंभाभावे तदन्यत्रापि तन्मात्रमारो-
पितं न तदुपलंभापादकमित्यर्थः किंच देशविशेषे प्रतियोगिसत्त्वस्यानुपलब्धिविरोधित्वानुसंधानवतैवान्यत्रापि तेन तदापादनीयमिति
वाच्यं न चाभावोपलंभसमये नियमेन देशविशेषे प्रतियोगि सत्त्वानुसन्धानमस्ति नचोक्तापादनरूपयोग्यानुपलंभं विना ऽभावधीः संभ-

**प्रतियोगिवैशिष्ट्यमात्रेणा भावाधिकरणे तदुपलंभप्रसंजनायोगात् अभावग्राहकेणपुंसाअन्य**
**देशीयप्रतियोगिवैशिष्ट्याग्रहणेनतस्यानुपलब्धिविरोधाभावाच्च किंचापादनशक्तिः प्रमेयगता**
**व्याप्तिस्तज्ज्ञानंवानान्यत् नचासद्वैशिष्ट्यनिरूपिताव्याप्तिरस्तीतितज्ज्ञानवाच्यं ततश्चा**

वतीति न त्वदुक्तरीत्याभावप्रत्यक्षत्वसिद्धिरित्याशयेनाह । अभावग्राहकेणेति । नन्वभावाधिकरणे सतः प्रतियोगिवैशिष्ट्यस्य तदुपलं
भाद्यापादकत्वेपि तच्छक्तिरस्ति ततश्च सैवाभावप्रत्यक्षत्वं प्रयोजिकेत्याशंक्याह । किंचेति नान्यदिति । असतीतीन्द्रिये धर्मभूतायाः
स्वरूपभूताया वा शक्तेरसंभावितत्वादिति भावः व्याप्तेरपि सामानाधिकरण्यरूपायाः समानकालीनत्वरूपाया वा स्वरूपेणासत्यसंभवा-
त्तज्ज्ञानं शक्तिरित्यभ्युपेयमिति । न चासद्वैशिष्ट्येति । भवतु व्याप्तिज्ञानमेव शक्तिः सैवाभावप्रयोजिकेति मन्वानं प्रत्याह । ततश्चेति।

प्रतियोग्यसत्त्वस्य तदुपलंभेन सह व्याप्तौ गृहीतायामेव व्यापकानुभवाभावेन व्याप्यप्रमेयाभावानुभवाभ्युपगमे नियमेन व्यतिरेक्यनुमानसामग्रीसत्त्वेनाभावस्यानुमेयत्वमेवस्यान्न प्रत्यक्षत्वमिति भावः न चानुमितिसामग्र्यां सत्यामपि संशयोत्तरप्रत्यक्षवत्प्रत्यक्षसामग्रीप्राबल्यादपरोक्षैवाभावधीः स्यादिति वाच्यं अनुपलंभस्य क्वचिदपि प्रत्यक्षसामग्री तेनाक्लृप्तत्वात्तत्प्राबल्यदूरापेतत्वादिति भावः प्रत्यक्षप्रतियोगिसत्त्वस्य तदुपलंभव्याप्यत्वग्रहादीनां भावप्रत्यक्षत्वप्रयोजकत्वमंगीकृत्याप्यतीन्द्रियेश्वरप्रतियोगिकभेदस्य प्रतियोगिन्युक्तप्रकारासंभवात्प्रत्यक्षत्वं न स्यादित्याह । एवमपीति । यद्यप्युक्तमतीन्द्रियस्यापि प्रतियोगिनः प्रत्यक्षधर्मिण्यापादितस्य प्रत्यक्षत्वयोग्यत्वाघटकतया

भावधीपूर्वं नियमेन व्यतिरेकव्याप्तिर्ज्ञाते तिवह्न्यादाविवाभावेनुमितिरेव स्यान्नप्रत्यक्षं एव
मपि प्रत्यक्षयोग्यशब्दादेरभावः प्रत्यक्षः स्यान्नत्वतींद्रियाभावःमनस्त्वादेर्घटे तर्कितसत्व

स्योपलंभापादकत्वेनानुपलंभविरोधित्वमस्तीति तदप्यसाधु तस्य धर्मिप्रत्यक्षत्वस्याप्यपलापकत्वापातेन सोपलंभापादकत्वस्य दूरापेतत्वादित्यभिप्रेत्याह । मनस्त्वादेरिति । यत्र मनस्त्वं तत्राणुत्वमिति नियमेन तद्वत्तयातर्कितघटस्याप्यणुत्वापातेन तद्धर्ममनस्त्वस्यानुपलंभ एव न्याय इति नत्वदुक्तयोग्यानुपलंभसंभव इत्यर्थः न च कुंभे महत्त्वोद्भूतरूपवत्त्वयोर्निश्चितत्वेन तत्र मनस्त्वारोपे तस्यापि प्रत्यक्षयोग्यवृत्तित्वापत्त्यातदुपलंभ एव कुंभे प्रसजनीयो नाणुत्वादेरिति वाच्यं अणुत्वादेरपि मनस्त्वव्यापकत्वेन निश्चयात्तदारोपे तदारोपस्याप्यनिवार्यत्वात् यदि तु कुंभे मनस्त्वोपलंभापादनसंभवमात्रेण तत्र तदभावः प्रत्यक्षःस्यात्तर्हि मनस्यपि कुंभत्वारोपे तद्व्यापक-

महत्त्वाद्यापत्त्या तत्रापि कुंभत्वोपलंभापादनसंभवात्तदभावोपि मनसि प्रत्यक्षः स्यात्तच्च नेष्टमिति भावः एवं तावदभावग्राहकप्रत्यक्ष सहकारिणी योग्यानुपलब्धिः सर्वत्र दुर्निरूपेत्युक्तं संप्रत्यन्यत्र या काचित्सास्त्व जीवेश्वरभेदग्रहे तत्संभव एव नास्ति जीवे पराभेदस्य सतस्तर्कितस्य वा मानसप्रत्यक्षयोग्यत्वे पि श्रुत्यादिसिद्धसहकार्यभाव संभवादित्याह । किंच सहकारीति । पूर्वपरिचयरहितसाधारण-वेषादिमद्देवदत्तिब्राह्मणत्वक्षत्रियत्वादिकचक्षुरादिसन्निकृष्टमपि तन्मात्रेण न निश्चीयते तत्कस्य हेतोः तद्व्यंजकविशिष्टमातापितृत्वाद्य, पस्थापकाप्तोपदेशरूपसहकार्यभावात्तच्च तावता तत्र ब्राह्मणाद्यभावनिश्चयः एवं जीवब्रह्माभेदेतद्ग्रहणयोग्यांतःकरणे च सत्यपि सह

स्य तद्व्यापकाणुत्वापादनेनानुपलंभाविरोधित्वात् किंच सहकार्य्यभावेन ब्राह्मणत्वाद्यनुपलंभवत्जीवेब्रह्मभेदानुपलंभोप्यभावंविनोपपद्यते ॥ लौकिकापदेशवदत्राप्याचार्य्यवान्पुरुषो वेद श्रोतव्य इत्यादिना सहकार्यांतरस्यप्रमितत्वात् नचजीवाभेदइवतस्मिन्विद्यमानब्रह्माभेदेपि

कार्यभावात्तदनुपलंभोपपत्तौ कुतो योग्यानुपलंभः कुतस्तरांच तद्भेदसिद्धिरित्यर्थः ननु दृष्टांते सहकारित्वमाप्तोपदेशस्यान्वयव्यतिरेकां सिद्धब्रह्माभेदानुभवति सहकार्यान्तरसत्त्वे मानाभावात्तदभावप्रयुक्तत्वानुपलब्धेरसिद्धमिति ग्राह्याभावप्रयुक्तत्वमेव वाच्यमित्याशंक्याह १८
तत्र लौकिकेति । तस्य यथा ह्यभितहृतप्रमुच्य प्रब्रूयादेतां दिशं गांधारा एतां दिशं व्रजन्ति सग्रामाद्ग्रामं पृच्छन्पंडितो मेधावीगांधारा नेवोपसंपद्येतैवमेवाचार्यवान्पुरुषो वेदेति यथा कश्चिदभिनद्धाक्ष एव गांधारदेशेभ्योपकृष्यारण्यानीं प्राप्यतस्तत्र तथैव त्यक्तः परिभ्रमन्के-

नचिद्दयालुना पांथेनाचार्याभिनद्धनं प्रमुच्य संगाधारदेशमार्गमुपदिष्टस्तदनुगुणायुक्तीरनुसंदधानो गांधारानेषप्राप्नोति एवं स्वयंप्रकाशब्रह्मा
जीवो नाद्यविद्याकामकर्मादिभि.प्रमुष्टविवेकः संसाराटवीं प्रापितो नानायोनिषु परिभ्रमन्नात्मतत्त्वनिश्चयवदाचार्योपदेशादिनात्मतत्त्व
साक्षात्करोतीतिश्रवणादीनांज्ञानांगतांदर्शयतितथाश्रोतव्योमंतव्यइत्यादिनाज्ञानोद्देशेनश्रवणादिविधानात्तेषांतादर्थ्यमवगतंतथातेषांत
कैवामतिरापनेया प्रोक्तान्येवैवसुज्ञानायप्रेष्ठेतिगुरूपदेशस्यावश्यकत्वंश्रावयतिततश्चतदभावदशायांसतोपिब्रह्मात्मैक्यस्यश्रुत्युक्तस्यतदुक्तस
हकारिविरहादेवानुपलंभसंभवात्परोक्तयोग्यानुपलंभसंभवइत्यर्थः नन्वात्मन्यनुभूयमानजीवाभेदवत्ब्रह्माभेदपिसहकार्यप्रत्याभावात्तद-

सहकार्यंतरापेक्षामनसो न स्यादिति वाच्यं जीवत्वादेर्मनोमात्रयोग्यतया तद्विशिष्टाभेद
19 स्य तावन्मात्रयोग्यत्वेपि सर्वात्मना योग्यतयातदात्मब्रह्माभेदे सहकार्यंतरापेक्षोपपत्तेः अन्य
थाजीवः दृष्टवद्भेदानुपलंभात्सोपि न स्या त् अपि च तमसाघटस्येव माययापहृतज्ञाना

भावादेव तदनुपलंभसंभव इत्युदाहृतश्रुतीनामन्यपरत्वमित्याशंक्य कर्तृत्वादिरूपजीवत्वस्य मनोमात्रग्राह्यत्वेनात्मनि तद्विशिष्टाभेदोप-
लंभेपि तदुपलक्षितसर्वोपप्लवरहितसच्चिदानंदघन प्रत्यग्ब्रह्माभेदस्य वेदान्ततत्तात्पर्यगोचरस्याव्यवसायरूपानुभवविशेषे मनोमात्रस्यसा-
मर्थ्याभावाच्छ्रवणाद्यपेक्षायुक्तेत्याह न च जीवाभेद इत्यादिना अन्याकारेण भेदानुभवेप्यन्याकाराभेदोपलंभाभावमात्रात्तस्य ततो भेद
परमते बाधकमाह । अन्यथेति । मनोमात्रेणात्मनि जीवभेदानुभवेप्यहमेव सुकृतीदुष्कृतीत्येवमाकारानुभवाभावात्तद्भेदानुभवप्रसंगे-

मात्मनः पापाद्याश्रयभिन्नत्वेन नित्यमुक्तता स्यादित्यर्थः ननु सहकार्यभावादागंतुकोपलंभाभावेपि स्वप्रकाशाभेदवादे स्वत एवोपलंभः
कथं न भवेदित्याशंक्याह । अपिचेति । इन्द्रियसन्निकर्षसत्यपि तमसा घटस्येवाभेदस्यापि तत्संशयादिप्रयोजकानाद्यनिर्वचनीयाज्ञा-
भे० नेनावृतत्वात्स्वप्रकाशचिद्रूपेपि तस्मिंस्तत्संशयादिविरोध्युपलंभाभावरूपानुपलंभसंभवान्नाभेदसत्त्वस्य तद्विरोधितेत्यर्थः उक्तावरणे किं
धि० प्रमाणमिति विवक्षायामाह । माययेत्यादिना अनिर्वचनीयाज्ञानमेव मायानवस्त्वन्तरमित्याशयेन भगवद्वचनान्तरमुदाहरति। अज्ञानेने-
१९ ति । विष्णुपुराणे तद्भावभावनापन्नस्तदासौ परमात्मना भवत्यभेदीति ज्ञानदशायां परमात्माभेदप्राप्तिसभिधाय तर्हि ज्ञानात्प्रागभेद

ज्ञानेनावृतंज्ञानं तेन मुह्यंति जंतवः भवत्यभेदोभेदश्च तस्याज्ञानकृतो भवेदित्यादिस्मृत्या
नीहारेण प्रावृता जल्प्याच अन्टतेन हि प्रत्यूढा इत्यादिश्रुत्याचाज्ञानेन वृतत्वाप्रतीतेःजीव
ब्रह्माभेदस्य नानुपलंभः सत्त्वविरोधी किंच मनो न जीवब्रह्माभेदयोग्यं यन्मनसा न मनुत

एवेति शंकां निराकर्तुं भेदश्च तस्याज्ञानकृत इत्युक्तं नहि वस्तुत अन्यस्यात्मत्वं ज्ञानसहस्रेणापि भवति ततश्च भेदप्रतिभासः प्रागवि- १९
द्यया विलसितोऽभेदश्च तिरोहित इति गम्यते अनन्तरं च तर्हि ज्ञाने नष्टे पुनरपि भेदोन्मज्जनमाशंक्य भेदनिदानाज्ञानस्य निर्लेपं न-
ष्टत्वान्न पुनस्तत्प्रसक्तिरिति तथा स्मृतेर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि तद्विद्यादात्मनो मायां यथाभासो यथा तम इत्यादिना वरण-
विक्षेपहेतुर्मायाविषयास्मृतिरादिपदार्थः प्रसिद्धनीहारस्य स्वविरोधिस्वावभासकसूर्यमंडलाच्छादकदर्शनेन श्रुतोनीहारपदेन स्वविरोधि-

स्वावभासकचैतन्यात्मब्रह्मावरकमज्ञानं विवक्षितं सुषुप्तिनीहारस्य स्वरूपावरकत्वादेरसंभवात्तत्कृतावरणविक्षेपौ प्रावृताजल्याविल्युक्तावष्ट-
रहः सुषुप्तिसमये ब्रह्मस्वरूपविरुद्धरूपादर्शनेन प्रत्यगभिन्नस्वप्रकाशकब्रह्मसंपत्तौ सत्यामपि तदलाभे हेतुरुच्यते श्रुत्यान्तरेन हि प्रत्यूढा
इति । अनृतमनिर्वचनीयमज्ञानं तेन च स्वरूपभूतब्रह्मणस्तदाप्यावृतत्वाद्विक्षेपाभावेपि तदप्राप्तिरित्यर्थः एवं तावन्मनसः प्रत्यग्ब्रह्मा-
भेदग्रहणायोग्यत्वं स्वीकृत्य सत्यपि तस्मिन्सहकारिविरहात्तत्सत्त्वं नानुपलंभविरोधीत्युक्तं संप्रतिस्वीकृतं परित्यज्य वेदान्तारंभात्प्राक्तद्ग्रा-
हकाभावेनैव तदनुपलंभसंभवान्न योग्यानुपलंभोस्तीत्याह । किंच मन इति । नमनुत इत्यादि श्रुतेरित्यत्रादिपदेन नावेदविन्मनुते

इत्यादिश्रुतेः किंतु तंत्वौपनिषदं पुरुषं सर्वे वेदायत्पदमामनंति इत्यादिश्रुत्यैकगम्यं ब्रह्मेति
न मनसोनुपलंभाद्धर्मादिवत्तदभावासिद्धिः किंच किमिदमीश्वरत्वं यद्विशिष्टाभेदानुपलंभा

तं बृहंतमित्यादि गृह्यते यत्पदमामनन्तीत्यादिश्रुतेरित्यत्रादिपदेन वेदान्तविज्ञानसुनिश्चितार्थाः वेदैश्च सर्वैरहमेव वेद्य इत्यादिर्गृह्यते
मनस इति । अयोग्यात्मनसोनुपलंभमात्रेणात्मनि परमते धर्माद्यदृष्टस्येव तस्य ब्रह्माभेदस्यासिद्धिरभावोनेत्यर्थः न च यन्मनसा न म-
नुत इत्येतदशुद्धमनोविषयं इति वाच्यं तथाप्यस्मदादेस्तदनुपलंभवदिति भावः पुनरपि जीवेश्वराभेदग्रहयोग्यत्वं मनसोभ्युपेतयोग्या-
नुपलब्धिमेव निराकरोति । किंचेति । किमात्मनीश्वरत्वविशिष्टाभेदानुपलंभस्तद्भेदसाधक उतात्ममात्राभेदानुपलंभः आद्येपि किमी-
श्वरत्वं जातिरुतद्व्यणुकादिकर्तृत्वं नित्यज्ञानवत्त्वं वा सर्वज्ञत्वं वा नित्यसर्वज्ञानवत्वं वेति विकल्पमभिप्रेत्याह । किमिदमिति । आ-

द्यं निराकरोति । न तावज्जातिरिति । न च विष्णादिभेदेनेश्वरनानात्वाद्यक्त्यभेदोसिद्ध इति वाच्यं नानात्वे सति तेषामीश्वरत्वायो-
गात् यतो वा इमानि भूतानि जायंत इत्यादिनैकस्यैव सृष्ट्यादिकर्तृत्वाद्यभिदानात्तत्कर्तृब्रह्मादिभेदानुपपत्तेः स ब्रह्मा स शिव इत्या-
भे॰ दिश्रुतिविरोधाच्च न वास्तवस्तद्भेदः औपाधिकस्तु व्यक्तिभेदो न जात्युपपादकः गगनादावदर्शनादितिभावः तथापि देवमनुष्यादीश्वरा-
धि॰ णामिन्द्रियजातिप्रभृतीनां परमेश्वरस्यच परस्परं भेदात्कथमीश्वरत्वं न जातिरित्याशंक्य तेषामैश्वर्यस्यागन्तुकत्वादागन्तुकस्य च जातित्वा-
२॰ योगात्सर्वजीवेषु पर्यायेण पाक्षिकैश्वर्यसंभवेनात्मत्वन तुल्यव्यक्तिकत्वाच्चनेश्वरत्वं जातिरित्याह न च लौकिकेश्वरेत्यादिना लौकिकेश्व-

## द्भेदइत्युच्यते न तावज्जातिः एकव्यक्तो तदभावात् न च लौकिकेश्वरसाधारणेश्वरत्वं जातिरितिवा
## च्यं समयभेदे न चैतन्मात्रे तदस्तींत्यात्मत्वाद्भेदानुपपत्तेः लौकिकेश्वराणांतद्भेदाननुभवप्रसंगाच्चनापि
## द्व्यणुकादिकर्तृत्वं तद्विशिष्टस्यातींद्रियतया तदभेदस्य सताप्यनुपलंभोपपत्तेः नापि नित्यज्ञानव

रसाधारणेश्वरत्वजातिस्वीकारे च लौकिकेश्वराणां तद्विशिष्टात्माभेदानुपलंभाभावात्तेषामीश्वराद्भेदो न सिद्ध्येदित्याह । लौकिकेश्वरा- २॰
णामिति । द्वितीयमपवदति । नापि द्व्यणुकादीति । जीवं प्रतिद्व्यणुकादेरतीन्द्रियतया तत्कर्तृत्वस्य तदभिन्नेश्वरे सत्त्वेप्यतीन्द्रियत्वा
त्तद्विशिष्टाभेदस्य सतोपि धर्मादिविशिष्टाभेदवदनुपलंभोपपत्तेर्न ततस्तदभावसिद्धिरित्यर्थः तृतीयं निराकरोति । नापीति । परमते जी
वे सत्यपि नित्यत्वे तस्य प्रत्यक्षत्वायोग्यत्वात्तद्विशिष्टाभेदाननुभववत्तदभिन्नेश्वरे सत्यपि नित्यज्ञाने तन्नित्यत्वस्यानुभवायोग्यत्वान्नित्य-

ज्ञानवदभेदस्य सतोऽप्यनुपलंभोपपत्तिरित्यर्थः चतुर्थमपाकरोति । नापिसर्वज्ञत्वमिति । सर्ववेद्यमित्यादिरूपस्य शब्दादिजनितसर्वविषय-ज्ञानमात्रस्य जीवे दर्शनान्न तद्वदभेदानुपलंभोस्तीत्यर्थः न च सर्वविषयप्रत्यक्षवत्त्वं तदितिवाच्यं योगिषु तस्याप्यनुभवादिति भावः पंच-ममुत्पादयति।नित्यसर्वज्ञत्वमिति।जीवज्ञानस्योक्तविधयासर्वविषयत्वे सति परमते ऽविनाशी वा अरेयमात्मानुच्छित्तिधर्मा इत्यादि वच-नात्तस्य नित्यत्वभ्रमसंभवात्सर्वज्ञत्वमात्मन्यभवतस्तद्वदभेदानुपलंभोसिद्ध इत्यर्थः ननु नित्यसर्वविषया परोक्षज्ञानवत्त्वमीश्वरत्त्वमित्या-

त्वंस्वनित्यतायाइवज्ञाननित्यतायाअपिप्रत्यक्षायोग्यत्वात् नापि सर्वज्ञत्वंसर्वविषयज्ञानवत्त्व मात्रस्य जीवेप्यनुभवात् नित्यसर्वज्ञत्वं नानुभूयत इतिचेन्न जीवज्ञाने नित्यताभ्रमदशा यां तद्वैशिष्ट्यस्यात्मन्यभूयमानत्वात् ज्ञानार्थयोः स्वरूपमात्रं संबंधश्चेत्सर्वं ज्ञानंसर्वविष यमेवेति निश्चयदशायां तदनुपलंभाभावेन भेदग्रहो नस्यात् ज्ञानस्याव्याप्यवृत्तित्वात्सर्वज्ञ

शंक्य परमते ज्ञानस्य स्वरूपातिरिक्तविषयसंबन्धाभावान्नियामकाभावेन सर्वस्य सर्वविषयत्वापत्तग्रोक्तरीत्याज्ञाने नित्यत्वभ्रमवतो घटा-दिज्ञानदशायां नित्यसर्वविषयापरोक्षज्ञानवत्त्वस्याप्यनुभवात्तदनुपलंभासिद्धेर्न जीवेशभेदग्रहसिद्धिरित्याह । ज्ञानार्थयोरिति । मास्तु त-दाभेदग्रह इत्याशंक्याह । अस्तिचेति । अपि च सर्वगतात्मवादे शरीराद्यवच्छिन्नात्मप्रदेशतद्धर्मयोरेव प्रत्यक्षयोग्यत्वान्नित्यसर्वज्ञत्वादि-रूपेश्वरत्वस्य तदवच्छिन्नात्मप्रदेशावृत्तित्वेप्यनुपलंभोपपत्तिः न चानित्यत्वात्मविशेषधर्माणामेव प्रदेशवृत्तित्वं लाघवेन विशेषगुणमात्रस्यै-

व तथात्वात्ततश्चात्मनि तदधिकरणाभेदस्य सतोऽप्यनुपलंभसंभवान्न ततस्तद्भेदसिद्धिरित्याह । किंच ज्ञानस्येति । अत्र दृष्टान्तमाह । नहि मूलेति । मूलप्रदेशे चक्षुःसन्निकर्षात्तदवच्छेदेन वृक्षानुभवेऽपि तत्राग्रत्वस्याभावादेवानुपलंभोपपत्तौ तद्विशिष्टवृक्षाभेदानुपलंभेऽपि वृक्षभ्रमतो मूलाग्रयोर्वृक्षभेदसिद्धिः एवमत्रापीतरथा तत्रापि भेदः स्यादित्यर्थः ननु मूलावच्छेदेन वृक्षे अग्रत्वावच्छिन्नवृक्षाभेदोपलंभात्तेन रूपेण न भेद इत्याशंक्य जीवेऽपि चिदात्माभेदानुपलंभो जीवे परभेदसाधक इति कल्पनोपास्तो वेदितव्यः नन्वामूलाग्रमेको वृक्ष इति मूलाग्रयोरेकवृक्षसंबन्धावगमान्मूलावच्छेदेनाग्रत्वानुपलंभमात्रान्न वृक्षभेदसिद्धिः जीवेश्वरयोस्तु नैकधर्मिसंबन्धोवभासते ततश्च जीवत्वा-

त्वादेर्जीवात्मप्रदेशाद्वृत्तित्वेनाप्यनुपलंभोपपत्तेर्न तदधिकरणभेदग्रहः संभवति नहि मूला वच्छेदेनाग्रत्वंनानुभूयत इति तदुभयाधिकरणभेदप्रमा संभवति वृक्षाभेदवदात्माभेदमात्रस्या नुपलंभाभावात् तत्रैकवृत्तित्वमनुभूयते यथा न तथात्रेति चेत् तत्संशयदशायामपि योग्या

वच्छेदेन सर्वज्ञत्वाद्यनुपलंभो बाधकाभावाद्धर्मिभेदसाधक इत्याशंकते । तत्रैकवृत्तित्वमिति । आत्मनो वियदादिवद्विभुत्वाद्द्रव्यत्वापर-जातिरहितत्वे सति वस्तुतो जीवात्मपरमात्मभेदायोगेन जीवत्वेश्वरत्वाधिकरणभेदनिश्चयोऽस्त्येव उक्तयुक्त्यनवतारदशायामपीश्वर-त्वस्य जीवे विभुत्वादिवदयोग्यत्वादनुपलंभः किंचान्यधर्मत्वादिति साधकबाधकाभावेन संशयस्यैवावसरो न तद्धर्मिभेदनिश्चयस्य इतर-थात्मनि विभुत्वादिवैशिष्ट्यस्य सर्वमूर्तद्रव्यसंयोगसमवायादिरूपस्यानवगमादात्मनि तद्विशिष्टभेदानुपलंभात्तद्भेदापात इत्याशयेनाह ।

तत्संशयदशायामपीति । तस्माज्जीवेश्वराभेदे योग्यानुपलंभाभावात्तदभावरूपतद्भेदेन प्रत्यक्षप्रमाणासंभव इति भावः एवमयोग्यानुपल-
ब्धिकमित्येतत्प्रपंच्य सोपाधिकस्त्वौ भेदोयमित्येतत्प्रपंचयितुमापाततो भेदप्रतिभासं स्वीकरोति । किं चाहमिति । जीवात्मा किं
स्वरूपेण विभुरुताणुर्मध्यमपरिमाणो वा आद्ये हमिहैवास्मि सदने इति प्रतिभासमानपरिच्छेदस्य तस्मिन्स्वाभाविकत्वायोगात्परिच्छिन्ना
हंकारशबलात्मन एवाहंप्रत्ययालंबनतया तत्र परिच्छेदप्रतिभास औपाधिक उपपादनीयः एवं चाहमीश्वरो नेत्यहं प्रत्ययावसेयभेदस्यो-
पाधिशबलात्मनिष्टतया तत्प्रतिभासो रक्तोयं स्फटिको न शुक्ल इति प्रतिभासवदाभासः द्वितीयस्त्वनुपपन्न इत्याह । अणुत्व इति । न-

# नुपलंभासंभवेन स्वस्य विभुत्वविशिष्टभेदवत्तद्भेदस्य ग्रहासंभवात् किंचाहमिहेति परिच्छिन्नतयानु भूयमाने जीवे भेदो नुभूयते नाह मीश्वरमिति नच निरुपाध्यात्मनः परिच्छेदो न संभवति अ णुत्वे आत्मनः सर्वशरीरव्यापिसुखाद्यनुपलंभप्रसंगात् विरुद्धदेशद्वये युगपत्प्रयत्नाद्यनुपलं

न्वात्मन एकदेशस्थत्वेपि तद्गुणानां गन्धादिवच्छरीरादिव्याधितोपपन्ने इति चेन्न गुणानां गुणिव्यतिरेकेण रूपादिवद्देशान्तरव्यापित्वा-
योगाज्जलादावौष्ण्यवत्साश्रयस्यैव गन्धादेर्देशान्तरव्याप्तिकल्पनादन्यथा एकशरीरसंबन्धि करद्वयेप्येकैकांगुलिमात्रे युगपत्प्रयत्न द्वयस्यैक-
स्मिन्नात्मन्यसंभवाच्चैकशरीरेनैक आत्मनो युगपद्गोक्तारो भवन्ति ततश्च तत्र युगपच्चलनद्वयमनुभूयमानमनुपपन्नं स्यादित्याह । विरुद्धदे-
शेति । तृतीयोप्यनुपपन्न इत्याह । स्वाभाविकेति।अनित्यत्वमुत्पत्त्यादिमत्त्वं ततश्च कृतहानादिरादिपदार्थं आत्मनः स्वतोणुत्वमध्यमप-

रिमाणवत्त्वनिरासफलमाह । ततो घटाकाशवदिति । औपाधिकस्यापि सत्यत्वं मन्यमानं प्रत्याह । न तस्येति । शंखाय: पिण्डादौ पीतद्दग्धृत्वादेर्यावद्द्रव्यभावि शुक्लत्वानुष्णत्वादिविरोधेन सत्यत्वानुपपत्तेः प्रतिबिंबत्वादिष्वौपाधिकस्य मिथ्यात्वदर्शनाच्चोपाधिकभेदस्य न सत्यतेत्यर्थः तर्ह्यनौपाधिक एव भेदोऽस्त्वित्याशंक्य तस्य परिच्छिन्नोपाधिपरामर्शे सत्येव प्रतिभासान्नास्वाभाविकतेत्यर्थः। नवानिरुपाधिकेति । एवं तावत्परिच्छिन्नाहंकारशवलात्मन एवाहं प्रत्यये तत्प्रतिभासात्तत्प्राप्यपरभेद आत्मनि परिच्छेदवत्तदुपाधिक एव न स्वाभाविक इत्युक्तं ननु सुखादिधर्म्यहंकारएवाहमनुभवालंबनं स एवात्मा तदनालंबनस्य घटादेरनात्मत्वनियमात्तस्मिंश्च स्वतः सर्वगते

भप्रसंगाच्च स्वाभाविकमध्यमपरिमाणे चानित्यत्वाद्यापत्तिः अनंतपरिमाणे च गगनवन्नसज्जातीयभेद इत्यात्मैक एव ततो घटाकाशवदौपाधिक एव परिछेद इति तद्गतोभेदोप्यौपाधिक इति न तस्य सत्यत्वं नवानिरुपाधिकता अपिच अहंकारोनात्मा दृश्यत्वात् घटवत् नचा

प्रतिभासमानः परिच्छेद एव शरीरतादात्म्यारोपनिबन्धनस्तदुपाधिकः परभेदस्तु तत्र प्रतिभासमानस्तस्य परस्मादभेदस्यासंभवात् स्वाभाविक एवेत्याशंक्याहंकारस्यानात्मत्वं साधयति । अपि चेति । दुःखादिसमसत्ताकस्तद्धर्मीप्रतियोगिसमसत्ताकात्मत्वप्रतियोगिकात्यन्ताभाववांश्चैतन्यविषयत्वात् घटवदिति प्रयोगो विवक्षितः तथा च किमहंकारोन्तःकरणं तदतिरिक्तो वा आद्ये सिद्धसाधनं द्वितीये बाध इत्यादेर्दोषस्यानवकाशः सिद्धांते चिदात्मनि कल्पितात्मत्वप्रतियोगिकवास्तवाभावसत्त्वेपि तत्प्रतियोगिकतत्समसत्ताकाभावस्य 

घटादाविवाभावादनात्मत्वाभावः सिद्धः तदहंकारेप्यर्थान्तरत्ववारणाय प्रतियोगिसमसत्ताकेत्यभावविशेषणं नन्वनात्मत्वेन दृश्यत्वं प्रयोजकं किंतु दर्शनानाश्रयत्वं घटादावनात्मनि नियमेन तद्दर्शनादतो प्रयोजको हेतुरित्याशंक्य तस्याभावघटितया गुरुत्वाल्लाघवेन दृश्यत्वमेव तद्व्याप्यत्वेन प्रयोजकमित्याह । नचाप्रयोजकत्वमिति । अहंकारस्यानात्मत्वेपि कथं तदतिरिक्तात्मत्वसिद्धिरित्याशंक्यानात्मनि पक्षे दृश्यत्वहेतोरतिरिक्तद्रष्टारं विनानुपपत्तेरर्थात्तत्सिद्धिरित्याह । पक्षधर्मतेति । नन्वहंकारात्मकल्पने गौरवात्तस्यैव स्वद्रष्टृत्वकल्पने लाघवं तदतिरिक्तात्मनि दृश्यत्वहेतोर्व्यभिचारश्च अदृश्यत्वे वा तदसिद्धिरित्याशंक्याह । सचेति । परेषामपि तावदन्तःकरणात्मास-

प्रयोजकत्वमूलाघवेनदृश्यत्वस्यैवानात्मत्वेनऽव्याप्तत्वादितिपक्षधर्मताबलादातिरिक्तात्मसिद्धिः सचसुखादिसाधकः स्वप्रकाशोयोनित्योनुभवः प्रागुक्तः सएवेतिनदृश्यः तथाचानात्माहंकारविशि

ष्टतः ततो नालौकिकात्मकल्पनागौरवं प्रत्युत तस्य मनसः प्रमातृत्वभंगसमर्थे दुःखादेः स्वप्नादेश्च साक्षित्वेन प्रमाणयुक्तिभ्यां साधितैकनित्यस्वप्रकाशानुभवमात्रत्वकल्पनादात्मना तत्त्वस्याभावाल्लाघवं परमते तु तत्कल्पनीयमिति गौरवं स्वप्रकाशानुभवात्मनि स्वतः सिद्धे तद्विषयत्वरूपदृश्यत्वाभावान्न व्यभिचारो न वा तदसिद्धिरिति भावः यच्चोक्तमहंकारे परिच्छिन्नदेहतादात्म्यारोपादेव परिच्छेदावभास इति तदप्ययुक्तं उक्तविधया अनात्मनोन्तःकरणरूपाहंकारस्योत्पत्त्यादिमतः सर्वगतत्वे प्रमाणाभावात्तत्र प्रतिभासमानपरिच्छेदस्य स्वाभाविकोपपत्तेः तस्य सस्वाभाविको न त्वौपाधिक आत्मनि तु तदुपाधिक एव सप्रतिभासते एवं तदुपाधिक एवात्मनि प्रतिभा-

भे०
धि०
२३

सते न स्वाभाविक इत्युपसंहरति । तथावेति । एवं तावन्मानाभावादयुक्तश्चेति जीवेशभेदसामान्येन सर्वप्रमाणाभावे प्रतिज्ञाय तत्र प्रत्यक्षाभावे प्रतिज्ञाते तत्र प्रत्यक्षाभाव आक्षेपसमाधानाभ्यामुपपादितः इदानीमनुमानाभावं प्रपंचयितुं वक्ष्यमाणानुमाने दूषणगणं संगृह्णाति। सिद्धसाध्यत्व इति । भेदो जीवेशभेदो नानुमानस्य गोचर इत्येतद्विवृणोति । अनुमानमपीति । जीवपरभेदसत्वत्वे किं जीवधर्मिकानुमानं प्रमाणं ब्रह्मधर्मिकानुमानं वा आद्येपि किं जीवे ब्रह्मभेदमात्रं साध्यं ज्ञानावाध्यत्वविशिष्टो वा पारमार्थिको नौपाधि-

ष्टजीवएवभिन्नतयाप्रतीयत इतिनाहमीश्वरइतिप्रत्यक्षंनिरुपाधिकजीवभेदेप्रमाणं सिद्धसाध्यत्वतोभेदोऽव्याप्यत्वासिद्धितोथवा वाधाजडत्वोपाधित्वान्नानुमानस्यगोचरः ॥९॥ अनुमानमपि न जीवपरभेदे प्रमाणं तत्र न तावज्जीवोब्रह्मधर्मिकभेदप्रतियोगीब्रह्मप्रतियोगिकभेदवान्वा पदार्थत्वादसंज्ञत्वाद्वा घटवदित्यनुमानं सिद्धसाधनत्वात् नच स्वज्ञानावाध्यभेदवानितिसा

को वा तद्भेदः साध्य इति विकल्पानभिप्रेत्याद्यमनूद्यसिद्धसाध्यत्वेन निराकरोति । तत्र न तावदित्यादिना । पद्यते इति पदं ब्रह्मत्वादिति यावत् ततश्च जीवस्य ब्रह्माभिन्नत्वे तदनुपपत्तिर्वाधिकापदार्थत्वादित्यस्य ब्रह्मणि न व्यभिचारश्च अत्र यद्यपि नियम्यत्वमात्रमव्यभिचारि तथापि तन्नियामकंसापेक्षं तेन विनान पर्यवस्यतीति ब्रह्मनियम्यत्वादित्युक्तमिति द्रष्टव्यं सिद्धसाधनत्वादिति जीवब्रह्मणोः परस्परप्रतियोगिकाविद्यकव्यावहारिकभेदस्य सिद्धान्तिनापि स्वीकारादित्यर्थः एतेन जीवस्य ब्रह्मणो भेदाभावे तन्नियम्यत्वानुपपत्तिरपि

प्रत्युक्तानियम्यत्वादेः स्वसमानसत्ताकनियन्त्रादिभेदसापेक्षत्वात्तस्य च स्वीकारादिति द्वितीयं निराकरोति । न चेति । नचेत्यस्य वा-
च्यमित्यनेनान्वयः स्वज्ञानावाध्यभेदस्य साध्यत्वेपि कथं सिद्धसाधनतापरिहार इत्याशंकितैवाह । ज्ञानावाध्येति । तत्र किं स्वपदोक्तजी-
ववाच्यकर्त्रादिरूपात्मज्ञानावाध्यत्वं भेदस्य साध्यमुततदुपलक्षिताखण्डचिदात्मज्ञानावाध्यत्वं ज्ञानमात्रा वाध्यत्वं वा आद्ये व्यावहारिका
निर्वचनीय भेदस्यापि संसारीजीवज्ञानावाध्यत्वंमेष्टतया सिद्धसाधनमित्याह । असत्यस्यापीति । द्वितीयतृतीयौ तु श्लोकोक्तव्याप्यत्वासि-
द्धि वमतारयन्निराकरोति । न च आत्मज्ञानेति । अत्र चेत्तत्तृतीयकल्पनिरासः समुच्चीयते सर्वस्य द्वैतस्य जडतया शुद्धचिदात्मन्यवि-

ध्यं ज्ञानावाध्यभेदश्च परमार्थ इति न सिद्धसाधनमितिवाच्यं असत्यस्यापिभेदस्य घटा
दिज्ञानेनेव जीवज्ञानेनावाध्यत्वात् न चात्मज्ञानावाध्यत्वं तेन विवक्षितमिति वाच्यं दृष्टां
तेपि साध्याप्रसिद्धेर्व्याप्यत्वासिद्धेः अतएव पारमार्थिकभेदवानितिसाध्यं निरस्तं न चानौपा

द्याविलसितत्वेन तज्ज्ञानबाध्यत्वस्वीकारात्तज्ज्ञानावाध्यस्य ज्ञानमात्रावाध्यस्य वा भेदस्य क्वाप्यनभ्युपगमात् घटादावपि व्याप्त्यभावेन
व्याप्यत्वासिद्धिरित्यर्थः पारमार्थिकभेदः साध्यइतितृतीयोपि।व्याप्यत्वादेवायुक्तइत्याह । अतएवेति। चतुर्थं मपवदति। नचानौपाधिकेति।अ-
त्रापि नचेत्यस्य वाच्य मित्युत्तरेणासंबन्धः यत्राभेदःप्रामाणिकस्तत्रभेदश्चौपाधिकइतिहिस्थितिः ततश्चघटादिभेदेनिरुपाधिकत्व स्योभयसम्म-
तत्वादत्र न साध्याप्रसिद्धिरितिशंक्यतुरेवाशयमाह।नचेति। अनादेर्जीवशभेदस्य निरुपाधिकत्वेपि घटादिभेदवन्मिथ्यात्वोपपत्तेः सिद्धसाधन-

ताचापि तद्वस्थेत्याशंक्य तस्यैवाशयमाह । जीवे चेति । अनादेर्जीवेशभेदस्याविद्याद्युपाधिकत्वाभावे सिद्धे तत्त्वज्ञानादविद्यादेर्निवृत्ताव-
पि तत्कार्यघटादिभेदवत्ततस्तन्निवृत्तेरयोगः तत्सत्यत्वसिद्धिरित्याशयः अस्यापि वाध्यत्वे हेतुमाह । नाहमीश्वरइति । अत्र किं नाहमी-
श्वर इत्यनुभूयमानस्य भेदस्य निरुपाधिकत्वं साध्यते उत तदतिरिक्तस्य नाद्यः अहं प्रत्ययस्यानात्माहंकारशवलात्मविषयत्वोपपादनात्त-
त्प्रत्ययभेदस्य तदौपाधिकत्वनिश्चयेन तन्निरुपपाधित्वस्य वाधितत्वात् न द्वितीयः तस्योपलब्धुं योगित्वेनुपलंभविरोधात्तस्य तदयोग्यत्वे

धिकभेदः साध्यते दृष्टांतेपि तत्सत्त्वात् जीवे चानौपाधिकभेदसिद्धौ केवलस्यैव भेदः सिद्ध्य
तीति सत्योभेदइति वाच्यं नाहमीश्वर इति भेदस्यौपाधिकत्वेनानहंकारजीवभेदाननुभवे
न च वाधितत्वात् ननु ब्रह्मजीवप्रतियोगिकधर्मिज्ञानावाध्यभेदवत्पदार्थत्वादसंसारित्वात् घ
टवत् ततश्चभेदस्य ब्रह्मज्ञानावाध्यत्वे सत्यत्वमितिचेन्न जीवप्रतियोगिकभेदस्य ब्रह्मणि

च हेतोरप्रयोजकत्वं संसारित्वासंसारित्वादिव्यवस्थाया औपाधिकदृष्टभेदादप्युपपत्तेरिति भावः इदानीं ब्रह्मपक्षकानुमानं प्रयुञ्जन्सिद्ध-
साध्यत्वादिपरिहारं शंकते । ननु ब्रह्मेति । अत्र पदार्थत्वादिति यथाश्रुत एव हेतुः न च जीवेन व्यभिचारः तस्यापि जीवान्तर प्रति- 
योगिकभेदोपगमेन पक्षसमत्वात् ननु रूपादिधर्मिघटादिज्ञानावाधिजीवप्रतियोगिकभेदस्य ब्रह्मणि सिद्धान्तिनापि स्वीकारात् सिद्धसा-
धनमित्याशंक्याह । ततश्चेति । धर्मिपदेन समभिव्याहृतभेदधर्मिण एव विवक्षितत्वात्प्रतिज्ञावचने ब्रह्मणस्तद्धर्मित्वावगमात्तद्धर्मिकभेद-

स्य तज्ज्ञानावाध्यत्वे तद्वदेव सत्यत्वसिद्धिरिति भावः धर्मिपदेन जीवप्रतियोगिकभेदधर्मिविवक्षायामपि किं यत्किंचित्तद्धर्मिज्ञानावा-
ध्यत्वं वा तत्र सिसाधयिषितं यावत्तद्धर्मिज्ञानावाध्यत्वं वा ब्रह्मज्ञानावाध्यत्वं वा नाद्यः स्वरूपातिरिक्तभेदवादिमते ब्रह्मणि घटादौ च
जीवभेदस्यैकत्वात्तद्धर्मिघटज्ञानावाध्यत्वं वा भेदस्य ब्रह्मणि सिद्धान्तिनापि स्वीकारेणाचापि सिद्धसाधनत्वादितिदूषयति । न जीवप्रति-
योगिकेति । द्वितीयंनिराकरोति । न च यावदिति । दृष्टांतेप्यभावादिति घटगतजीवभेदस्यापि स्वधर्मिब्रह्मज्ञानवाध्यत्वस्वीकारेण याव
द्धर्मिज्ञानावाध्यत्वस्यासंप्रतिपत्तेश्चापि व्याप्यत्वासिद्धिरित्यर्थः अतएव न तृतीयोपीति भावः ननु ब्रह्मजीवप्रतियोगिधर्मिज्ञानावाध्य-

घटादौ चैकत्वेन स्वधर्मिघटज्ञानावाध्यतयासिद्धसाधनत्वात् नच यावद्धर्मिज्ञानावाध्यत्वं
भेदविशेषणमिति वाच्यं दृष्टांतेप्यभावात् नच स्वज्ञानावाध्येतिविशेषणान्नोक्तदोषइतिवाच्यं ब्रह्मा
दिपदवाच्यस्य ब्रह्मणो यत्किंचिद्धर्मविशिष्टत्वेन तज्ज्ञानावाध्यत्वेपि भेदे सत्यत्वासिद्धेः वेदांततात्पर्य

भेदवदिति प्रतिज्ञातायां धर्मिपदं त्यक्त्वा तत्स्थाने स्वपदं प्रयुज्यते तस्य च समभिव्याहृतपरत्वस्य व्युत्पत्तिसिद्धत्वात्प्रतिज्ञायां पक्षपरत्वमुदा
हरणे तु घटादिपरत्वमिति न सिद्धसाधनं न वा व्याप्यत्वासिद्धिरिति नेत्याह । न च स्वज्ञानेति । प्रतिज्ञाया ब्रह्मपदसमभिव्याहृतस्व-
पदेन किं ब्रह्मेशादिपदवाच्यमनवच्छिन्नत्वसर्वज्ञत्वादिविशिष्टं विवक्षितत्वात्तज्ज्ञानावाध्यत्वं भेदे साध्यते उतात्र ब्रह्मपदेन वेदान्तता-
त्पर्यगोचरं निर्विशेषं सत्यज्ञानादिरूपं वस्तु लक्षयित्वा तत्समभिव्याहृतस्वपदेनापि तत्परामृश्य तज्ज्ञानावाध्यत्वं साध्यत्वे आद्ये सिद्ध-

साध्यत्वं तदवस्थं तद्भेदे विशिष्टब्रह्मज्ञानाबाध्यत्वस्य सिद्धान्तिनापि स्वीकारादित्याह । ब्रह्मादिपदेति । यत्किंचिद्धर्मविशिष्टत्वेन अपरि-
भ० च्छिन्नत्वादिविशिष्टत्वेन हेतुना तद्विशिष्टज्ञानाबाध्यत्वमित्यर्थः द्वितीये तत्त्वमस्यादिवेदान्तानां ब्रह्मादिपदलक्ष्यस्याद्वयानंदस्य प्रत्यग्बोधात्म-
धि० जीवाभेदेतात्पर्यस्य समत्वमित्यादिसूत्रैर्निर्धारितत्वादत्राप्यनन्तरं वक्ष्यमाणत्वाद्धर्मिग्राहकवेदान्तबाधितविषयं जीवाद्ब्रह्मणोभेदानुमान-
२५ माभास इति ग्रंथश्लोकोक्तं वा ध्रुवमवतारयति । वेदान्ततात्पर्येति । किंच पञ्चीकृतस्य वेदान्ततात्पर्यगोचरब्रह्मणा निर्विशेषत्वेन तत्त्वध-
र्ममात्राभावात् पदार्थत्वादिहेतोः सिद्धिरित्याह । हेतोरिति । किंच घटादेर्जडतया दृश्यत्वेन मिथ्यात्वात्तद्विषयज्ञानस्य घटतद्भेदहेत्व-

**गोचरब्रह्मपरत्वेन ब्रह्मशब्दस्य धर्मिग्राहकमानबाधोहेतोरसिद्धिश्च जडत्वं चोपाधिः तच्चास्वप्रकाशत्व**

**म् स्वप्रकाशत्वं वामनः श्रुतिन्यायसिद्धमिति नतदसिद्धिः नवा साधनव्यापकतासर्वेषां चोक्तहेतूना**

विद्यानिवृत्त्ययोग्यत्वात्तत्र स्वज्ञानाबादप्रभेदवत्त्वजाड्यप्रयुक्तमिति जडत्वमुक्तं साध्यव्यापकं साधनवति स्वप्रकाशत्मन्यभावात्साधना-
व्यापकं च ततश्च सोपाधिकत्वादयं हेत्वाभास इत्याशयेन जडत्वोपाधित्वादित्येतदवतारयति । जडत्वं चेति । ननु प्रमेयत्वातिरिक्तज- २५
डत्वाभावात्तस्य च केवलान्वयित्वात्साधनव्यापकत्वादिना नोपाधित्वमित्याशंक्याह । तच्चास्वप्रकाशमिति । ननु प्रमेयत्वातिरिक्तगगन-
कमलिनीकल्पत्वात्तदभावात्मकास्वप्रकाशत्वमपि तादृशमेवेत्याह । स्वप्रकाशत्वं चेति । स्वप्रकाशत्वं हि विनैव प्रकाशविषयविषय-
त्वमहिम्नैव स्वसत्ताप्रकारकसंशयाद्यगोचरत्व मत्रायं पुरुषः स्वयंज्योतिरात्मैवास्य ज्योतिरन्य एव तद्विदितादित्यादिश्रुत्यासुखमहमस्वाप्स-

मिति परामर्शानुपपत्त्यात्मन्यवस्थाचर्येपि सत्ताप्रकारकसंशयाभावानुपपत्त्या च मनसः प्रमाकरणत्वनिरासार्थमुक्तन्यायेन च सिद्धं घटादौ तु तदभावरूपं जडत्व मित्यनुवद्योयमुपाधिः इत्यर्थः जीवगतो ब्रह्मभेदः स्वप्रतियोगिज्ञानावाध्यः अज्ञातसत्ताकत्वे सति भेदत्वात्सप्रतियोगिकत्वाद्वा घटपटप्रतियोगिकभेदवदित्यादिहेतूनां पूर्वोक्तानां च विपक्षे वाधकाभावात्संदिग्धानैकांतिकत्वमप्याह । सर्वेषामिति । चकारोनुक्तसमुच्चयार्थः जीवानां परस्परमीश्वराद्यभेदाभावे स्वर्गनरकसंसारित्वासंसारित्वादिव्यवस्थानुपपत्तिर्वाधिकेत्याशंक्याह । कल्पितेति । अस्या व्यवस्थाया व्यावहारिकत्वात्तादृशभेदं विनानुपपत्तावपि न भेदसत्यत्वं विना काचिदनुपपत्तिरस्ति केवलव्यतिरेका-

मप्रयोजकत्वं कल्पितभेदेनापि निखिललौकिकवैदिकव्यवस्थितव्यवहारोपपत्तेर्वक्ष्यमाणश्रुति वाधश्च तस्मान्नानुमानं भेदे प्रमाणं मानांतरप्रसिद्धत्वान्मिथ्यात्वादप्रयोजनात्श्रुत्यंतरविरोधाच्च

भावादिति भावः शुद्धब्रह्मपक्षकानुमानविशेषस्योपजीव्यश्रुतिविरोधः प्रागुक्तः संप्रति नान्योतोस्ति द्रष्टा एष त आत्मान्तर्याम्यमृतः तत्त्वमेवत्वमेव तत् अयमात्मा ब्रह्मतत्त्वमसीत्यादिभिर्निरपेक्षाभिरुत्तरभावितया प्रवलाभिः श्रुतिभिर्विरोधात्सर्वे हेतवो वाधितविषया इत्याह । वक्ष्यमाणेति । जीवेशभेदविषयानुमाननिराकरणमुपसंहरति । तस्मादिति । एवं मानाभावादित्यत्र संगृहीतमनुमानप्रमाणाभावं प्रपंच्यागमप्रमाणाभावंप्रपंचयितुं जीवपरभेदस्यागमाप्रतिपाद्यत्व हेतून्संगृह्णाति । मानान्तरेति । अत्र भेदग्राहि प्रत्यक्षस्य प्रमाणत्वं परमतेनानुदितं न तु वस्तुवृत्त्या न तत्प्रमाणत्वस्य प्राप्तिरासीत्तथा चानुभवसिद्धत्वादिति तदर्थः अतएव नाहमीश्वर इति भेदप्रतीति-

रस्तीति तद्विवरणसमये वक्ष्यते ऋतं पिबंतो द्वासुपर्णेत्यादि न जीवेशभेदे प्रमाणमनुपलब्धेर्ये तत्प्रमाणमिति अज्ञातेर्थे जैमिन्यादिभिः
भे० श्रुतिप्रामाण्यतो निर्द्धारितत्वं नान्यतोवगतेभेदे तत्प्रामाण्यायोगात् श्रुत्यापि दुःखादिधर्मीसंसारीश्वरो नेत्यादिरूपेणैव भेदप्रतीतेस्तस्य
धि० चौपाधिकत्वेन मिथ्यात्वोपपादनादहंकारातिरिक्तात्मभेदस्य परेषामपि श्रुत्यर्थत्वेनानभ्युपगमात् श्रुतिजन्यभेदज्ञानस्य स्वर्गापवर्गाख्यप्र-
२६ योजनानंगतया श्रुतेरध्ययनविधिप्रापितप्रयोजनवत्त्वव्याघातात् मृत्योः समृत्युमाप्नोति यदहना नेव पश्यतीत्यादिना भेदज्ञानाजन्ममर-
णाद्यनर्थस्यैव श्रवणाद्वक्ष्यमाणविधयाभेदपरानेकश्रुतिविरोधाच्चेति श्लोकार्थः मानान्तरप्रसिद्धत्वादित्येतद्विवृणोति। अस्तीति। तर्हि तत

॥२०॥

श्रुतिर्भेदगोचरा,एवंश्रुतिरपिनभेदे प्रमाणं अस्तिहि श्रुतिप्रतिसंधानविरहिणामपि नाहमीश्वर भेदप्रतीतिःपरंतु सः वर्णितरीत्यायोग्यानुपलब्धेरभावाद्बिंबप्रतिबिंबभेदवन्मायिकः साक्षिमात्रासिद्ध इति वयं ब्रूमः ततश्चानुभवसिद्धेन श्रुतितात्पर्यंकल्पनीयम्श्रुतितात्पर्य्यंविनापि प्रमाणाभावप्रयुक्तत

एव भेदः सिद्ध इतिमदिष्टसिद्धिरित्याशंक्याह। परंतु सइति। भेदं प्रत्यक्षप्रतिपन्नत्वमात्रं स्वीक्रियते तच्च श्रुतिप्रामाण्यवारणाय न तु २६
तत्प्रमाणं तदसंभवस्योक्तत्वादनुभवमात्रस्य शुक्तिरजतादिसाधारणत्वात्तन्मात्रात्तस्य न सत्त्वसिद्धिरित्यर्थः भेदस्यान्यतः सिद्ध।वपूर्वत्वाभा-
वान्न श्रुतितात्पर्यगोचरत्वं इत्याह। ततश्चेति। अपूर्वत्वरहिते शब्दतात्पर्यंनेत्यत्र न्यायमाह। श्रुतितात्पर्यमिति। येन वाक्येन यत्र प्रती-
त्युत्पादने न मानाभावप्रयुक्तसत्त्वशंका।निवर्त्यते तस्य तत्र तात्पर्यमन्यथा तस्य तदर्थत्वायोगात् यत्परः शब्दस्सशब्दार्थइति न्याया त्य-

था ज्योतिष्टोमादिवाक्यस्य यागादिगतस्वर्गसाधनत्वादौ भेदेत्वन्यतो निश्चितेऽसत्त्वशंकाया एवाभावात् श्रुतितात्पर्यकल्पनं विफलमि-
त्यर्थः अर्थप्रतीतिमात्रमेव वाक्यतात्पर्यनियामकं किं न स्यादित्याशंक्य तस्यान्यथाप्युपपत्तेर्न तत्कल्पकतेत्याह । न च श्रुतीति । प्रती-
तिमात्रस्यार्थतात्पर्यकल्पकत्वेतिप्रसंगमप्याह । अन्यथेति । ग्रहं संमार्ष्टीत्यत्रोद्देश्यग्रहविशेषणतया प्रतिपन्नैकत्वेपि तात्पर्यं तत्र ग्रहमा-
त्रस्योद्देश्यत्वसंभवेऽपि तद्विशिष्टस्योद्देश्यत्वकल्पनायां गौरवात्तस्य पृथगुद्देश्यता स्यात् ग्रहं संमार्ष्टि तच्चैकमिति ततश्च प्रत्युद्देश्यं वा-
क्यपरसमाप्तेर्विध्यावृत्तिरूपवाक्यभेदः स्यादिति शब्दावगते तत्र तात्पर्यकल्पनमयुक्तं तवापत्तेरित्यर्थः नन्वेवमपि भेदस्य प्रत्यक्षादिप्रवृत्तेः

दसत्त्वशंकाया व्यावर्त्तितत्वात् नच श्रुतिजन्यज्ञानविषयमात्रे तत्तात्पर्यमिति नियमः ता
त्पर्याभावेपि शब्दशक्त्यादिभिरर्थप्रतीत्युपपत्तेः अन्यथाग्रहकत्वादावपि तात्पर्यप्रसंगः श्रु
तिसिद्धमेव भेदं प्रत्यक्षाद्यनुवदतीति विपरीतमेवास्त्विति चेन्न यस्य यत्प्रमाणाधीना स

प्रागपूर्वतयानिरपेक्षश्रुतिप्रमेयत्वाच्छ्रुतेस्तत्र तात्पर्योपपत्तिरिति शंकते । श्रुतिसिद्धमेवेति । प्रत्यक्षादेरपि निरपेक्षतया प्रथमप्रवृत्तिसंभ-
वाच्छ्रुतिसिद्धभेदानुवादित्वनियमस्तावदयुक्त इत्याह । नेति । तर्हि कस्यचित्प्रथमप्रवृत्तात्श्रुतिर्भेदे प्रमाणमित्याशंक्य तस्यानियमेनोत्तर-
भावित्वेन भेदस्य प्रमेयत्वं निराकर्तुं प्रमेयत्वनियामकं तावदाह । यस्येति । प्रमाणाभावादिदमसदिदमसदितिशंका यस्य येन प्रमाणेन
व्यावर्त्यते तत्तत्प्रमेयमित्यर्थः श्रुतेर्वाक्यार्थविषये मानान्तरानपेक्षत्वेपि पदपदार्थव्युत्पत्तिसापेक्षत्वात्तस्याश्च प्रत्यक्षानुमानसापेक्षत्वात्त-

योः पूर्वं प्रवृत्तिरवश्यमभ्युपेया ततश्चात्मभेदविषययोरपि प्रत्यक्षानुमानयोर्निरूपितरूपयोः स्वसामग्रीतः प्रथमप्रवृत्तेः श्रुत्यनभिज्ञेष्विव तदभिज्ञेष्वप्यावश्यकत्वात्तत एवात्मभेदासत्त्वशंकानिवृत्तेस्तत्सिद्धभेदानुवादिनी श्रुतिरसत्परेत्याह। भेदश्चेत्यादिना। ननु प्रत्यक्षसिद्ध आत्मभेदो व्यावहारिको वास्तववस्तुः तद्भेदो पूर्वः श्रुतिगम्यो भवत्वित्याशंक्य श्रुतेरनुवादत्वनिराकरणायैवमपूर्वार्थकल्पने वेदे सर्वत्र मानान्तरासिद्धविस्पष्टार्थानुवादभगप्रसंगेन भेदांतरस्य वाधितत्वान्मैवमित्याशयेनाह नचानुभवादिगोचर इत्यादिनातर्हि प्रत्यक्षादिसिद्धभेदानु



त्वशंकाव्यावृत्तिस्तत्प्रमेयं भेदश्च निरपेक्षानुभवव्याप्तिबलप्रवृत्तानुमानाभ्यामेवासद्वयावृत्तत यासिद्धः नबहुसापेक्षविलंवितश्रुत्येति श्रुतिरेवानुवादः न वानुभवागोचरस्तात्त्विकभेदः श्रुतिगोचर इतिवाच्यं जीवे भेदद्वयस्यवाधितत्वात् न चास्यैवतात्त्विकत्वं श्रुत्यर्थइतिवाच्यं पामराणामपितत्तात्त्विकत्वबुद्धेः सत्त्वात् परंतु साधिष्ठानचैतन्यनिष्ठेन्यस्माभिरुच्यते त्वया

वादेन तस्य तदसिद्धं वा स्ववत्त्वं श्रुत्या प्रतिपाद्यत इत्याशंक्यातिप्राकृतानामपि वाधानुदयेनोत्सर्गतस्तत्सत्यत्वस्यापि सिद्धेर्मैवमित्याह। न चास्यैवेति। भेदे पामराणामपि तात्त्विकत्वबुद्धिस्वीकारे परस्येष्टापत्तिमाशंक्याह। परंत्विति। सा तात्त्विकत्वबुद्धिरधिष्ठानचैतन्यवस्तुतत्तात्त्विकत्वविषयेत्यर्थः अनर्दमिरजतादाविदंता प्रतिभासवद्वस्तुतः सद्विलक्षणेपि भेदे सदधिष्ठानतादात्म्यादेवघटादाविवसत्त्वबुद्धिः २७
स्वतो भेदादिसत्तायाः श्रुत्यादिवाधितत्वादिति सिद्धान्तिभिः स्वीक्रियते परेण तु साक्षात एव तत्सत्तागोचरति नचैतावता तस्य

तात्त्विकत्वसिद्धिः न वा तस्या पूर्वत्वं येन श्रुतिप्रमेयता स्यादिति भावः ननु भेदप्रत्यक्षस्य तात्त्विकातात्त्विकसाधारणविषयस्यस्मृतिवाक्यस्यैव श्रुतिमुपजीव्यतात्त्विकविषयस्वरूपं प्रामाण्यं परैः कल्प्यते ततश्च स्मृतिसमानविषयश्रुतेरिव प्रत्यक्षसिद्धभेदविषयश्रुतेरपि नानुवादित्वेनाप्रामाण्यमित्याशंक्याह । न च श्रुतिवलादित्यादिना स्मृतिवाक्यस्य हि पौरुषेयतया मूलप्रमाणापेक्षत्वात्तदर्थस्यालौकिकतया श्रुतिरेव तन्मूलमिति तदपेक्षं तत्प्रामाण्यमितियुक्तं प्रत्यक्षादेस्तु श्रुतिरेव स्वार्थप्रवृत्तमानान्तरनिरपेक्षत्वान्न तदपेक्षं तत्त्वावेदनप्रामाण्यं किंतु स्वतोर्थक्रियाकारित्वाद्वेदवदिति परेषामभ्युपगमात्तद्विरुद्धं भेदप्रत्यक्षस्य श्रुत्यपेक्षया तत्त्वावेदकत्वाभिधानमिति भेदश्रुतेःस्मृ-

तु भेदस्यैवेति किं श्रुत्या न च श्रुतिवलादेवास्माभिर्भेदप्रत्यक्षस्य तात्त्विकविषयत्वं कल्पितमिति न श्रुतिवैयर्थ्यमिति वाच्यं श्रुतेरिव प्रत्यक्षादीनामपि स्वतः प्रमाणत्वात्परस्य यावद्व्यवहारं घटादिवद्वाधाभावाच्च अतएव सिद्धांत्यभिमतमिथ्यात्वं श्रुतेर्बाधीतज्ञातनिरस्तम्परस्य श्रुतिसमानप्रमाण्यप्रत्यक्षेणैव त

तिमूलश्रुतिवन्न प्रामाण्यसिद्धिरित्यर्थः भेदसत्त्वस्य प्रत्यक्षादिसिद्धत्वेपि तस्यानादिवादिपरंपरापरिकल्पितस्य प्रतिपन्नोपाधौ वाध्यत्वरूपमिथ्यात्वस्यासद्वादिप्राप्तासत्त्वस्यैवाभावः पूर्वश्रुतितात्पर्यगम्य इति कस्य चित्कल्पनामपवदति । अतएवेति । एतद्विवृणोति । परस्येति । भेदस्य तात्त्विकत्वं नामवाधायोग्यत्वं तथा च तद्ग्राहकत्वनाभ्युपेत्यप्रत्यक्षादिनैव वाध्यत्वरूपमिथ्यात्वस्य निषेधसिद्धिः परमते श्रुतेरिव प्रत्यक्षादेरपि तत्त्वावेदकत्वात्ततश्च न तस्यापूर्वतेत्यर्थः परस्य प्रत्यक्षादिना द्वैतसत्यत्वसिद्धावनभ्युपगमे वाधकमाह। अन्यथेति। भेदस्यापूर्व-

त्वाभावाच्छ्रुतिर्नैतत्परेत्युपसंहरति । तस्मादिति । सिद्धमें द इति शेषः इदानीं मिथ्य.त्व दिति श्लोकोक्तहेतुं प्रपंचयति । किं चाहम-
र्थ इति । उक्तरीत्येति परिच्छिन्नाहंकारपरामर्शे सत्येवात्मनभेदप्रतीतेः तत्परिच्छेदवद्भेदाप्यौपाधिकत्वान्मिथ्येत्युक्तयुक्त्ये त्यर्थः सोपाधिक-
स्याप्यात्मभेदस्य वास्तवत्वमंगीकुर्वाणमेकदेशिनं प्रत्याह। च नसोपाधिकमपीति।घटाकाशादिगतभेदचलनादेर्दर्पणमुखादिगतश्यामत्वादेः
औपाधिकस्य नियमेन मिथ्यात्वस्यसर्वजनीनत्वात्क्वचिदपि तस्य सत्यत्वात् न घटतइत्यर्थः नत्वात्मभेदस्य लौकिकवैदिकव्यवस्थितव्यवहा-
रप्रयोजकतयार्थक्रियाहेतुत्वाल्लचणत्वाच्च सत्यत्वस्य कथं मिथ्यात्वमित्याशंक्याह।अर्थ क्रियेति ।न तावदर्थक्रियाकारित्वमेवसत्त्वं च.र प्र-

त्सिद्धेः अन्यथाऽद्वैतवाक्यानां प्रत्यक्षादिवाधपोन्यासस्तवासंगत एव स्यात् तस्मान्न प्र-
त्यक्षादिसिद्धेःश्रुतेस्तात्पर्यें किंचाहमर्थं प्रतीयमानभेदस्योक्तरीत्यासोपाधिकतया मिथ्यात्वेन
न तत्रतत्त्वावेदक ुतितात्पर्यं न चसोपाधिकमपिकिंचित्सत्यं अर्थक्रियाप्रयोकत्वलक्षण

कार्यस्य तदभावेनासत्त्वापत्यापूर्वपूर्वस्याप्यसत्त्वेन सर्वशून्यत्वायोगात् अर्थक्रियातोप्यविच्छिन्नार्थक्रिया ऽभावेन तस्या अप्यसत्त्वापातात् 
नाप्यर्थक्रियायोग्यत्वंसत्वं परिमते नित्यपरिमाणे तस्याप्यभावेनासत्त्वापातान्नापि तत्सत्त्वव्याप्यंस्वप्नादाविव मायिकत्वे न म यामपार्थक्रि-
याहेतुत्वोपपत्तौ व्याप्तत्रभावात्स्वप्नादिवैधर्म्यं च जाग्रद्दशायां मायिकत्वेप्यविद्यातिरिक्तदोषाजन्यतया सति प्रमातर्यवाध्यत्वादेवोपपद्यते
ततश्च नैतावता सर्वथा वाध्यत्वरूपसत्त्वसिद्धिरिति भावः किंचोपहितानुपहितादीश्वरादत्यन्तभिन्नःभिन्नाभिन्नो वा ऽद्यभेदस्यौपाधिकत्व

कल्पनावैयर्थ्यं द्वितीयस्त्वसंभवादयुक्त इतितस्यततोन्यंताभेद एववाच्य इतिकथं तद्भेदस्यवास्तवत्वमित्याह।अनुपहितेति । अप्रयोजनादित्ये-
तद्विवृणोति।भेदज्ञानादिति अध्ययनविध्युपात्तवेदान्तानांफलपर्यवसायित्वमावश्यकंततश्चस्वर्गादेःक्षयादिदोषग्रस्ततयामुमुक्षुभिलाषत्वायो-
गात्प्रत्यक्षादिभेदजन्यज्ञानादपितदुपपत्तेश्चनौपनिषद्भेदज्ञानस्यतत्प्रयोजनंमोक्षस्य तु तमेवविदित्वातिमृत्युमेतीत्यात्मसाक्षाज्ज्ञानाधीन-
त्वश्रवणात्सोपिन तत्फलं।मत्यप्रत्यभेदज्ञाना।दनवद्येत्युक्तं न केवलभेदज्ञानादर्थाभावः अनर्थश्च ततः श्रूयते ततोपि श्रुतिर्न तत्प-
रेत्याह।प्रत्युतेति।एतस्मिन्नात्मनिउतअपिपरं अल्पंअन्तरसीषदपिभेदंयःकुरुतेभेदाभेदमपिजानातितस्यजन्मादिभयंभवतिइह आत्मनिन नै

५१ सत्यत्वस्य मिथ्यात्वाविरोधिनःश्रुत्यर्थत्वायोगानुपहिताभिन्नैतस्मिन्नवाध्यते तद्भेदासंभवा
त्भेदज्ञानादनवद्यपुमर्थाभावेन तस्य तत्परश्रुतिजन्यत्वायोगाच्च प्रत्युतोदरमंतरं कुरुते अथ
तस्य भयं भवति मृत्योः समृत्युमाप्नोति य इह ना नैव पश्यति इति भेदज्ञानस्यानर्थहेतु
त्वं श्रूयते अथ ये न्यथातो विदुरन्यराजानस्ते क्षयलोका भवंति अथ योन्यां देवतामुपास्ते

मिथ्याभूतं नानावस्तुसत्यत्वेन यः पश्यति स मृत्योर्मरणान्तरं पुनःपुनर्जन्ममरणे प्राप्नोतीत्यर्थः।भेददर्शिनिन्दया भेदस्यश्रुत्यानिन्दितत्वा
दपिनतस्यास्तवतत्पर्यमित्याह।अथय इति।आत्मैवेदंसर्वमित्यद्वैतात्मानमुपसंहृत्यसवाएष एवं पश्यन्नित्यादिना तज्ज्ञानान्निरतिशयानन्दा
वाप्तिरूपममृतत्वमुक्त्वाअन्यथेत्यथातोविदुरित्यादिनाभेददर्शिनोनिन्दतिअतउक्तरूपाद्द्वैतादन्यथाभेदेन भूमानं ये विदुस्तेऽन्यराजानः क्ष-

न्यो राजा स्वामी येषां तेऽन्यराजानोऽस्वतंत्रा इति यावत्ते भिन्नदेवतोपासनादिना क्षयिष्णुलोका भवन्तीत्यर्थः तमेवैकं जानथ अन्यावाचो मुंचथेत्यनात्मज्ञाननिषेधस्य शब्दार्थः एवं मानान्तरप्रसिद्धत्वादित्यादिहेतूनामसद्धं युक्तितो निरस्य श्रुतार्थापत्त्यापि तां निराकुर्वन्श्रुत्यंतरविरोधादित्येतद्विवृणोति । नान्योतोस्तीति । अतोन्तर्यामिणोन्यो द्रष्टा नास्तीत्यादिनिषेधानां पारमार्थिकद्रष्टृस्वरूपविषयत्वायोगात्तद्विशेषणान्यत्वनिषेधपरत्वं तद्वाक्यानां गम्यते तस्याज्ञातत्वे सत्यत्वे वा प्रयोजनवत्त्वे वा निषेधायोगादर्थात्तस्य ज्ञातत्वमिथ्यात्वाप्रयोजनत्वानि सिद्धानीति तदुपोद्वलितत्वनिषेधश्रुतिविरोधाद्भेदश्रुतयोत्यपरतया नेतव्या इति भावः ननु नान्योतोस्ति द्रष्टेति श्रुति

अन्योसावन्योहमस्मीति न सवेद यथा पशुरित्यादिना भेदस्य निंदितत्वाच्च न तत्र श्रुतितात्पर्यं नान्योतोस्ति द्रष्टानान्योतोस्ति श्रोता नात्र काचनभिदास्तीत्यादिनावाक्येनानधिगतावाधितप्रयोजनवद्भेदाभावस्य प्रतिपादितत्वाच्च न भेदः सत्यो न वा श्रुत्यर्थः नचेदं

द्रष्टृपदेनेश्वरं परामृश्य तस्यैवान्तर्यामिनः सकाशाद्भेदप्रतिषेधयतीति न तस्याजीवेशभेदश्रुतिविरोधित्वेत्याशंक्य द्रष्टपदेन चेतनसामान्यवाचिनाजीवस्याप्युपात्तत्वेनावधारणायोगाच्च तन्मात्रे निषेधपरेयमिति तावदाह । नचेदमिति । वस्तुतस्तु नान्योतोस्ति श्रोता नान्योस्ति मंतेत्यादिना श्रोत्रादिजन्यज्ञानवत एव ततोभेदप्रतिषेधादीश्वरस्य शरीरेन्द्रियादिरहितस्य तद्वत्तायोगाज्जीवस्यैवान्तर्यामिण ईश्वराद्भेदनिषेधपरोयं संदर्भ इत्याह । श्रोत्रादीति । अपि चानन्तरवाक्ये प्रष्टुरुद्दालकस्य जीवस्यान्तर्याम्यात्मास्वरूपमिति जीवेश्वराभेद-

मभिधायातोतमद्दार्तमित्यन्तर्याम्यतिरिक्तस्यनेश्वरत्वाभिधानाजीवेशभेद एव तत्र निषेध्य इत्याह । भेदेप्रतिषिध्येति किंचात्मैकत्वाभाव-
वादिमतेपि धर्मिग्राहकमानेनेश्वरस्यान्तर्यामिरूपेणैव सिद्धत्वात्तद्भेदस्याप्रसक्तस्य निषेधोनुपपन्न इत्याह । ईश्वरनानात्वस्येति । एवं पू-
र्वोक्तहेतुभ्यः सर्वासां भेदश्रुतीनां सामान्यतस्तत्परत्वं निरस्य प्रत्येकमपि तन्निराकरोति किंच । द्वासुपर्णेति । वाक्यमिति शेषः अस्या-
न्यपरतां दर्शय न्भेदे तात्पर्याभावमुपपादयति तथाहीत्यादिना अहंकारेण तादात्म्यं यस्य स चासौ जीवश्चेति तथोक्तः अयं हि मं-
त्रो जीवस्य पराभिन्नस्यैव बुद्धिविशिष्टरूपेण कल्पितभेदस्य भोक्तृत्वमनूद्य तस्यैव तदविशिष्टरूपेणान्यस्य स्वतस्तदभावं प्रतिपादयति इत

वाक्यमीश्वरस्यैव भेदंप्रतिषेधतीति वाच्यं दृष्टृसामान्यभेदस्यैव प्रतिषेधत्वात् श्रोत्रादिभे
दस्य प्रासिद्धजीवं विहायान्यत्रासंभवाच्च भेदं प्रतिषिध्येत आत्मांतर्याम्यमृत इत्यभेदप्रति
पादनाच्च ईश्वरनानात्वस्याप्रसक्तस्याप्रसक्तत्वाच्च न निषेधः किंच द्वासुपर्णेति न जीवेश्वरभे

रथाऽनीशया शोचति मुह्यमानः निरंजनः परमं साम्यमुपैतीत्यादिवाक्यशेषविरोधापातान्न च साम्यमुपैतीति मुक्तौ भेदस्य सूचितत्वा-
त्तस्य सत्यत्वमिति वाच्यं परमसाम्यस्याभेद एव पर्यवसानादन्यथा न त्वत्समश्चाभ्यधिकश्च दृश्यते न त्वत्समोस्त्यभ्यधिकः कुतोन्य इ-
त्यादिवचनविरोधादपि चायं मंत्रः पैङ्गिरहस्य ब्राह्मणेन तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमन श्नन्न्योभिचाकशीतीत्यतश्नन्न्यो ऽभि
पश्यतीतिज्ञस्तावेतौसत्त्वक्षेत्रज्ञौ तदेव तत्सत्त्वं येन स्वप्नं पश्यति अथ योयं शरीर उपद्रष्टा स क्षेत्रज्ञ इत्यादिना चित्स्वभावो जीवो

जडस्वभावबुद्धितादात्म्यापन्नसत्त्वशब्दवाच्यस्तदुपाधिकभेदेन शुद्धचिदात्मनोभिन्नो भोक्तृत्वादिविकारमनुभवति केवलजडस्य भोक्तृत्वायो
गात्केवलस्तु तद्रहितः शुद्धबोधात्मनाभिमतः प्रकाशत इति बुद्धिकृतभेदाद्यनुवादेन शुद्धजीवस्वरूपपरतयाव्याख्यात इति नास्य जीवेश
भेदपरतेति भावः शुद्धजीवस्वरूपे प्रतिपादयिषिते तयोरन्य इति विशिष्टेभोक्तृत्वानुवादः किमर्थ इति वीचायामाह । विशिष्टानुवाद-
भं० स्येति । अनुभूयमानभोक्तृत्वस्य शवलात्मधर्मत्वेवगते केवले तन्निषेधः शक्यो वक्तुमनुभवान्न इति इतरथा अनन्यथा सिद्धानुभवविरोधे-
धि० न तन्निषेधायोगात्तदर्थमेव तदनुवाद इत्यर्थः अथर्वणगतस्यास्य मंत्रस्य जीवेशभेदपरत्व तद्गतोपक्रमादिविरोधश्च स्यादित्यर्थः । अन्य
३०

दपरं तथाहि तद्धितयोरन्यः पिप्पलं स्वाद्वत्तीमहंकारतादात्म्यापन्नं जीवमनूद्यानअन्नन्योअ
भिचाकशीति तमेव ततोनिष्कृष्याभोक्तृतयादर्शयति विशिष्टानुवादश्च निष्कृष्टाहंकारस्य
तस्याभोक्तृत्वं प्रतिपादयितुमेव तथा सति ह्यनुभवविरोधः परिहृतंस्यात् अन्यथा कस्मि ३०

श्वेति । कस्मिन्न्हि भगव इति वाक्यमात्मैव सर्वस्य स्वरूपमित्येतत्परमन्यथा तज्ज्ञानात्सर्वतत्त्वज्ञानोपन्यासायोगात्ततश्चेदं भेदविरोध्येव
अन्येषां तद्विरोधित्वं स्पष्टमेव । भेदवाङ्निषेधस्येति । तमेवैकं जानथ आत्मानमित्यद्वितीयात्मनात्मन एव ज्ञातव्यत्वाभिधानात्ततोन्याभेद-
विषयावाचोद्दयातिप्रतीतिः भेदविवक्षिते तद्विरोधः स्यादित्यर्थः पूर्ववाक्यस्य द्वासुपर्णेत्यस्मात्पूर्ववाक्यस्येत्यर्थः श्रुत्यन्तरगतस्याप्यस्य भेद
परत्वं पैङ्गिब्राह्मणविरोधो दुष्परिहर इत्याह । तयोरन्य इत्यादिना । एवं ऋतं पिबन्तावित्यत्रापि पिबद्पिबतोरौपाधिक एव भेदोनू-

द्यते आत्मेन्द्रियमनोयुक्तभोक्तेत्याहुर्मनीषिण इति तत्रैवोपाधिशबलस्य भोक्तेत्याहुर्मनीषिण इति तत्रैवोपाधिशबलस्य भोक्तृत्वाभिधाना-
त् एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रति रूपो बभूवेति प्रतिबिंबादि भावेन भेदस्याप्यौपाधिकत्वाभिधानात् इति द्रष्टव्यं ननु तैत्ति-
रीयश्रुतौ विदुषो मुक्तौ ब्रह्मणा सह भावश्रवणात्तस्य भेदं विनानुपपत्तेः तस्यैव सत्यत्वं विना मुक्तकालीनत्वानुपपत्तेः सत्यभेदोऽस्तीति-
त्याह । नापि सोऽश्नुत इति । अत्र स विद्वान्ब्रह्मणा सह सर्वान्विषयानाप्नोतीत्यर्थो न संभवति ब्रह्मवेदब्रह्मैव भवति यत्रत्वस्य सर्व-

न्नु भगवोविज्ञाते सर्वमिदंविज्ञातमित्युपक्रमस्य अन्यावाचो विमुंचथेति भेदवाङ्निषेध
स्य च ब्रह्मैवेदमिति पूर्ववाक्यस्य ब्रह्मवेदब्रह्मैवभवतीत्युपसंहारस्य च बाधः स्यात् तयोरन्यः
पिप्पलं स्वाद्वत्तीति सत्त्वं अनअन्नन्यो अभिचाकशीतीत्यनअन्नन्यो अभिपश्यतीतिज्ञ
इत्यादिवाक्यविरोधश्चस्यात् नापि सोऽश्नुते सर्वान्कामान्सहेतिमुक्तौ भेदश्रवणात्तस्य ता
त्त्विकत्वं ब्रह्मरूपेण युगपत्सर्वानंदानुभवस्यैव तदर्थत्वात् मुक्तौ तदितरभोगस्या ऽसंभवाद

मात्मैवाभूत्तत्केन कं पश्येदित्यादिबहुश्रुतिविरोधात्सहयोगे ब्रह्मणेति तृतीयास्वीकारे सह युक्ते प्रधाने इति पाणिनीयवचनाद्योगो त-
त्साहित्यस्वीकारप्रसङ्गाच्च ब्रह्मणो भोगाप्राधान्ययोरापत्तेश्च तस्माद् ब्रह्मणेति तृतीयेत्थंभावे ततश्च तद्भावकारकाविद्यानिवृत्तौ तद्भावं
गतो विद्वांस्तदन्तर्भूतान्सर्वान्कामान्मानुषानन्दादारभ्योत्तरोत्तरशतगुणित।ब्रह्मानन्दावसानान्सहयुगपदनुभवतीत्येवैतदर्थो ग्राह्य इ-

त्याशयेनाह ब्रह्मरूपेणेत्यादिना किंचोक्तार्थपरतया श्रुतिरियं ब्रह्मगीता यां ब्रह्मणादेवान्प्रति व्याख्याता तत्रोक्तमाह । तदुक्तमिति । न-
न्वात्मा द्रष्टव्यः य आत्मानमन्तरोयमयतीत्यादिश्रुतिभिर्जीवपरयोर्दर्शनादौ कर्तृकर्मभावस्य नियमेनादौ तु कर्म कर्तृभावस्य चाभिधा-
भे० नात्तस्य च तात्त्विकभेदं विनानुपपत्तेस्तत्सिद्धिरित्याशंक्य न तत्पराभेदश्रुतिविरोधाद्भेदस्य वास्तवत्वानुपपत्तेरतत्परश्रुतिप्रतीति कर्म-
धि० कर्तृत्वादिभावस्य च व्यावहारिकभेदेनैवोपपत्तेरित्याह । नापि जीवेति । कर्तृकर्मभावादिपरत्वाभावेत्यस्याप्यर्थस्याभावात् श्रुतेरप्रा-
२१

न्यथा सहयुक्तेऽप्रधानइति ब्रह्मणो गुणत्वभोगयोः प्रसंगात् तदुक्तंस्कंदे सोऽश्नुते सकलान्कामा
नक्रमेण सुरर्षभाः विदितब्रह्मरूपेण जीवन्मुक्तो न संशय इति नापि जीवब्रह्मणो द्रष्टृद्रष्टव्य
भावादिश्रुतिर्भेदविषया तस्याः कल्पितभेदेनैवोपपत्तेः तत्तात्पर्यगोचरब्रह्मणः सत्यत्वेन तत्प्रा
माण्योपपत्तेः न चभेदश्रुतिरेवकल्पिताभेदाविषयेति वाच्यं अनुभूयमानभेदविरोधेन प्राती

माण्यापात इत्याशंक्य ब्रह्मप्रतिपादकवाक्यैकवाक्यतया तत्परत्वात्प्रामाण्योपपत्तिरित्याह । तत्तात्पर्येति । नन्वभेदश्रुतिविरोधाद्भेदश्रु-
तिः कल्पितविषयतेति कथं वैपरीत्यमेव किं न स्यादिति नेत्याह कल्पितत्वं ह्यभेदस्यानिर्वचनीयत्वं तच्च तस्य प्रातिभासिकत्वेन व्याव-
हारिकत्वेन वा स्यात्तच्च नोभयमपि घटते भेदप्रतिभासे विरोधनाभेदप्रतिभासासंभवात्तदधीनव्यवहाराभावाच्चेत्याह । अनुभूयमानेति।
श्रुत्यनभिज्ञानामभेदप्रतिभासाभावेपि तदभिज्ञानां तत्प्रतिभासात्तस्य प्रतिभासकत्वमित्याशंक्य किं श्रुतिस्तत्परा उत नेति विकल्प्या-

दोचैत्यवन्दनादिवाक्यवत्तदप्रामाण्यापात इत्याह । श्रुतिपरिचयेति । ज्ञानाभावेनेत्येतदनंतरं श्रुतिपरिचयवतामपीति शेषः द्वितीयं शंकते अभेदे तात्पर्यलिंगस्यापूर्वत्वादेः सत्त्वात्तदभावो न युक्त इत्याह । न चाज्ञातेति । भेदश्रुतिविरोधादभेदश्रुतिर्जीवे ब्रह्मसादृश्यपरात्दुपास्ति परावास्त्वित्याशंक्य व्यावहारिकभेदानुवादित्वेनाविरोधस्योक्तत्वादिच्छामात्रेणाभेदश्रुतेरन्यपरत्वकल्पनायां श्रुतहान्यादिदोषापात इत्यभिप्रेत्याह । न चान्यपरेत्यादिना न केवलमभेदश्रुतेः श्रुतहानाद्यापत्तिः किन्तु तत्रापवादोऽर्थापत्तिश्रुतीनामुपक्रमोपसंहारपरा-

तिकस्य व्यावहारिकस्य वा अभेदस्याभावात् श्रुतिपरिचयहीनानामभेदज्ञानाभावेन तदेकवेद्यस्यमिथ्यात्वे तदप्रामाण्यप्रसंगात् श्रुतेस्तत्र न तात्पर्यमितिचेत् न अज्ञाते पुमर्थसाधने तस्मिंस्तात्पर्यस्यावश्यकत्वात् न चा न्यपराभेदश्रुतिरुपासनापरावास्त्विति वाच्यं श्रुतपरित्यागाश्रुतकल्पनाप्रसंगात् एकविज्ञानात्सर्वविज्ञानवाचारंभणमृदादिदृष्टांतपरमात्मप्रवेशादिभिरभेदोपपादनैवयर्थ्यात् अभेदोपक्रमादिभिस्तत्प्रतिपादनं च न स्यात् तस्मान्निरव

मर्शफलश्रुतीनां वैयर्थ्यापात इत्याह । एकविज्ञानादित्यादिना । येनाश्रुतं श्रुतं भवति वाचारंभणं विकारो नामधेयमनेन जीवेनात्मनानुप्रविश्येत्यादिभिरभेदोपपादनादित्यर्थः प्रवेशादिभिरित्यादिपदेन प्रविष्टस्य दर्शनश्रवणादिव्यवहारो गृह्यते अभेदश्रुतेः कल्पताभेदविषयत्वान्यपरत्वनिरसनफलमाह । तस्मादिति । सत्यमभेदं विनोक्तरीत्यार्थान्तरासंभवान्निरवकाशत्वं ततश्च भेदश्रुतेर्दुर्बलायास्तद्विरो-

धान्न भेदे प्रामाण्यमिति भावः एवंभेदसत्यत्वे श्रुतिप्रामाण्यं निरस्यार्थापत्तिमपि निराकरोति । अत एवेति । एतद्विवृणोति । सत्यभेद-
मिति । यत्र वा अन्यदिव स्यात्तत्रान्योन्यत्पश्येदित्यादिश्रुतिपर्यालोचनया सत्यपि वास्तवाभेदे निर्वचनीयव्यावहारिकभेदादेव तादृशा-
खिललौकिकवैदिकव्यवहारोपपत्तेराश्रयणीयत्वादर्थापत्ते रनुत्पन्नादेव सत्यत्वेन तत्प्रमाणमित्यर्थः एवं वास्तवभेदाभावेनुपपत्त्याभावमुक्त्वा
जीवात्परमात्मनः स्वतो भेदे तस्यात्मत्वानुपपत्तिरिति बाधकमाह । भेदे जीवादिति । जीवाद्भेदे सतीत्यर्थः किं भेदिमते लौकिकप्रसि-
द्धानुरोधेनाहमनुभवालंबनयोग्यत्वमात्मत्वमुत ज्ञानाश्रयत्वजातिविशेषो वा आद्ये मनोजन्यानुभवे कदापीश्वरस्याप्रकाशमानस्य तदालं-

काशत्वात्तत्परत्वाच्चाद्वैतश्रुतिर्बलीयसी अत एवार्थापत्तिरपि न भेदे प्रमाणं सत्यभेदेविना
नुपपन्नार्थाभावात् भेदे च जीवादीश्वरस्यानात्मत्वापत्तिश्च अहमनुभवे ऽप्रकाशमानस्य
घटादिवदनात्मत्वात् परमतेप्यात्मत्वस्य सुखसमवायिकारणतावच्छेदकस्य तदनधिकरणे

बनत्वयोग्यत्वाभावादनात्मत्वापात इत्याह । अनुभव इति । अप्रकाशमानस्येतिच्छेदः नचेश्वरस्य स्वकीयाहमनुभवे प्रकाशमानत्वसंभ-
वात्तदभावोसिद्ध इति वाच्यं तस्य दुःखादिधर्माहंकारगोचरतयाक्लृप्तस्य त इहेति परमेश्वरेऽसंभवात्तत्र तत्रेश्वरप्रयुक्ताहंशब्दस्य निरहं-
कारस्वरूपमात्रतया वक्ष्यमाणत्वेन तादृशानुभवे प्रमाणाभावाच्चेत्यर्थः एतेन द्वितीयोपि कल्पो निरस्तो वेदितव्यः अहमनुभवागोचरस्य घ- ३२
टादिवज्ज्ञानाश्रयत्वायोगात् किंच स्वप्रकाशज्ञानस्य तत्स्वरूपत्वेन तदाश्रयत्वाभावापत्तेश्च तस्मिन्नसंभवान्नावचेन ज्ञानस्यैवात्मपदाभि-

लक्ष्यत्वेन तत्र तद्व्यवहारोपपत्तेरन्यथा दुःखाद्याश्रयत्वमेवात्मत्वं किं न स्यादिति तृतीयेपीश्वरस्यात्मत्वानुपपत्तिमाह । परमतेपीति । परैरनुगतप्रत्ययालंबनतया कार्यतावच्छेदकतया वा कारणतावच्छेदकतया वा जातिःस्वीक्रियते आत्मत्वे चाद्यद्वयासंभवात्तृतीय एव वाच्यः तत्र चात्मत्वस्य दुःखादिसमवायिकारणमात्रवृत्तित्वे सा संभवति अवच्छेदकस्यावच्छेद्यानधिकवृत्तित्वनियमात्तस्य तदसमवायिनि तटस्थेश्वरे वृत्त्ययोगात् न च जीवत्वमेव दुःखादिसमवायितावच्छेदकं तस्य चेश्वरेनुपपत्तिरिष्टैव आत्मत्वं तु तत्रापि जीवसाधारणात्मपदप्रवृत्तिनिमित्ततयोपेयमिति वाच्यं जीवत्वस्य दुःखादिमत्त्वरूपोपाधित्वे गौरवादसंभवाच्च तदवच्छेदकायोगाज्जातिविशेषरूपस्य

## वृत्त्ययोगात् एवं जीवा अपिच न भिद्यंते तथाहि ध्वंसाप्रतियोगी देवदत्ताहमनुभवविशेष्यः

तस्यानुपदमेव जीवभेदनिरासेन निरसिष्यमाणत्वादपरिच्छिन्नचिद्रूपत्वस्यैवोभयत्रात्मपदप्रवृत्तिनिमित्तत्वाच्च न जीवेशानुगतात्मत्वजातिसिद्धिरिति भावः जीवेशभेदे प्राग्योग्यानुपलब्धिनिरासादेव षष्ठप्रमाणमपि न तस्य सत्त्वसाधकमिति सिद्धं एवं प्रमाणाभावाज्जीवेशभेदे
93 तात्त्विकत्वाभावमुपपाद्य जीवानां परस्परभिन्नानां कथमेकेन ब्रह्मणा भेद इत्याशंक्याह मसौनेत्याद्याकारेणाहंकाराद्युपाधिकानिर्वचनीयो भेदोनुभवगोचरो न निरुपाधिकः वास्तवस्तु भेदो निरस्यत इत्यभिप्रेत्य निरुपाधिकभेदाभावं तावदनुमानेन साधयति । ध्वंसाप्रतियोगीति । अत्र ध्वंसाप्रतियोगि देवदत्तानुभवविषयभूतो विशेष्यः सपक्षःतस्य भौतिकदेहातिरिक्तो यो यज्ञदत्ताहमनुभवविशेष्यस्तत्प्रतियोगिनिरुपाधिको भेदो घटादौ प्रसिद्धः पक्षेपि परैः स्वीकृतस्तद्राहित्यं साध्यम् सिद्धान्ते देहादेरप्यहमनुभवविशेष्यत्वात्तत्र वाधवारणाय ध्वंसाप्रतियोगीति पक्षविशेषणं यज्ञदत्ताहमनुभवविशेष्ये तदीय आत्मनि सिद्धसाधनतावारणाय पक्षे देवदत्तपदं प्रयुक्तं घटव

ट्वमित्यादि परोपेतदेवदत्तानुभवविशेष्ये घटत्वादौ बाधवारणायाहमनुभवेत्युक्तं तद्विषयमात्रस्य पक्षत्वेऽहंत्वस्यापि तद्विषयत्वेन तत्र च बा-
भे० धः स्यात्तन्निवारणायाहमनुभवविशेष इत्युक्तं देवदत्तात्मनि यज्ञदत्ताहमनुभवविशेष्यतदीयदेहेन्द्रियादिप्रतियोगिकनिरुपाधिकभेदस्वी
धि० कारात्तद्ग्राहित्वसाधने बाधः स्यात्तद्वारणाय भौतिकातिरिक्तेत्युक्तम् साध्ये आत्मत्वस्यापि तद्विषयत्वात्तत्प्रतियोगिकभेदाभावसाधने बा-
३३ धः स्यात्तद्वारणायाहमनुभवविशेष्येत्युक्तं तद्विशेषकयज्ञदत्तात्मप्रतियोगिकसोपाधिकभेदस्य पक्षे स्वीकारात्तन्निषेधे बाधः तद्वारणायानौ-
पाधिकेत्युक्तं तत्र हेतुद्वयमाह । कार्यकारणेति । स्थूलसूक्ष्मशरीरे कार्यकारणपदार्थः सिद्धान्ते शरीरेन्द्रियादिषु व्यभिचारवारणाय तद्व्य-
तिरिक्तत्वविशेषणं घटादावात्मत्वे च तद्वारणायाहमनुभवविशेष्यत्वादित्युक्तं द्वितीयहेतौ पक्षदृष्टान्तयोरसिद्धिसाधनवैकल्यपरिहाराय

**न भौतिकातिरिक्तयज्ञदत्ताहमनुभवविशेष्यप्रतियोगिकानौपाधिकभेदवान् कार्यकारणातिरिक्त**

स्वावृत्तीति विशेषणम् नन्वेवमपि तयोः स्वावृत्तिपरोक्षज्ञानविषयतत्रादीश्वरज्ञानविषयत्वाच्च स दोषस्तदवस्थ एव न च स्वावृत्तिलौकिक-
प्रत्यक्षाविषयत्वादिति विवक्षितमिति वाच्यं तथासति परमते नित्यातीन्द्रियेषु सिद्धान्ते चाहंकारे व्यभिचारापत्तेरिति चेन्न ज्ञानप-
देन प्रकृताहमनुभवस्य विवक्षितत्वात्तथा चाहमाकारानुभवविषयत्वे सति स्वावृत्त्याहमनुभवाविषयत्वादिति हेतुर्विवक्षितः तत्र धर्मादौ ११
व्यभिचारवारणायाहमाकारानुभवविषयत्वं सतीत्युक्तं तत्र यद्यप्यहं धर्मीत्याकारानुभवोऽस्ति तथाप्यहमाकारांशविषयत्वाभावान्न व्यभि-
चारः ज्ञाने च विषयभेदप्रयुक्तांशभेदः परैरभ्युपगम्यते तावन्मात्रस्य देहादौ व्यभिचारवारणाय स्वावृत्त्याहमनुभवाविषयत्वादित्युक्तं तत्रानु
भवाविषयत्वस्याहमनुभवाविषयत्वस्य च पक्षदृष्टान्तयोरप्रसिद्धिवारणेन व्याप्तिग्रहोपयोगाय स्वावृत्तीत्युक्तं न च सिद्धान्तेऽहंकारेण व्यभिचा-

रः तन्मते तस्याहमाकारवृत्तिविषयत्वस्वावृत्त्यहमाकारसाक्षिरूपानुभवविषयत्वस्वीकारेण तच्च हेतुभावादित्यादिद्रष्टव्यं नन्वंकुराद्यकर्तृकं शरीराजन्यत्वादित्यत्र शरीरपदवदत्रापि स्वावृत्तिपदमसिद्धिमात्रवारकत्वाद्व्यर्थमितिनेत्याह । व्याप्तिग्रहेति । हेत्वप्रसिद्धिनिवारणेन यद्विशेषणं व्याप्तिग्रहोपयोगि तद्धेतुविशेषणं परैरप्युपादीयते शरीरपदं तु नैवं यथा चक्षुस्तैजसं रूपादिषु पंचस्वरूपस्यैवाभिव्यंजकत्वादालोकवदित्यत्र रूपादिष्विति विशेषणं तथेदमपीति न व्यर्थमित्यर्थः ननु ध्वंसाप्रतियोगित्वं कार्यकारणतातिरिक्तत्वं चात्मनः सुगतानां लोकायतानां चासम्मतं ततश्च पक्षहेत्वोरसिद्धिरित्याशंक्य तद्व्यतिरिक्तपरीक्षकान्प्रत्येवायं प्रयोग इति नोक्तदोष इत्याह । सर्वेषामिति ।

त्वे सत्यहमनुभवविशेष्यत्वात्स्वावृत्तिज्ञानाविषयत्वाद्वा यज्ञदत्तवत् व्याप्तिग्रहोपयुक्तत्वाच्च स्वावृत्तीति न व्यर्थम् सर्वेषामप्यास्तिकानां संघातद्वयातिरिक्तआत्मासिद्ध इति न पक्षहेत्वोरसिद्धिः वृत्तिरप्यात्माध्यस्तैवात्मविषयेति नसिद्धांते द्वितीयहेत्वसिद्धिरपि न च यज्ञ

ननु सिद्धान्तेऽहमाकारवृत्तेरंतःकरणपरिणामित्वेन तदेकवृत्तित्वात्तद्विषयस्यात्मनः स्वावृत्त्यहमनुभवविषयत्वात्तदाविषयत्वरूपो हेतुरसिद्ध इत्याशंक्यान्तःकरणधर्माणां तदवच्छिन्नात्मन्यध्यासात्तदवच्छिन्नात्मनोपि वृत्त्यधिष्ठानतया तदाश्रयत्वस्वीकारात्तस्यापि स्ववृत्त्यहमनुभवगोचरत्वमेव न च तस्य स्वावृत्तिस्वरूपानुभवगोचरत्वमिति वाच्यं स्वस्य स्वविषयत्वायोगादित्यभिप्रेत्य न स्वमतेपि हेत्वसिद्धिरित्याह।वृत्तिरपीति।तथापि यज्ञदत्तसुखाद्यभावानधिकरणत्वादिना सोपाधिकत्वाद्धेतुद्वयं व्याप्यत्वासिद्धमित्याशंक्योपाधिं निराकरोति।न च यज्ञदत्ते ति।

यस्मिन् यज्ञदत्तात्मनि स्वप्रतियोगिकभेदराहित्यं तत्र तत्सुखाद्यभावानधिकरणत्वं तत्सुखाद्यधिकरणत्वयोः सत्त्वात्साध्यव्यापकत्वं साधनवति देवदत्तात्मन्यभावात्साधनाव्यापकतेति तयोस्तत्रोपाधितेति न च वाच्यम् । तत्र हेतुमाह । सुषुप्तीति । यज्ञदत्तस्वापकालीने तदात्मन्युक्तसाध्यवत्यपि तदीये सुखप्रागभावाद्यधिकरणे उक्तोपाध्योरभावात्साध्याव्यापकत्वं यज्ञदत्तसुखाभावानधिकरणत्वमित्यत्राभावपदेनात्यन्ताभावविवक्षायां यज्ञदत्तशरीरानवच्छिन्ने तदात्मनि तदीयसुखात्यंताभावसत्त्वात्तदनधिकरणत्वसुखाधिकरणत्वयोरभावात्तत्र साध्यव्यापकत्वं दुर्वारमित्यर्थः ननु साध्यवति यज्ञदत्तात्ममात्र उक्तोपाध्योरभावेपि तच्छरीरावच्छिन्नात्मनि सत्त्वात्तयोः साध्याव्यापकत्व

दत्तसुखाद्यभावानधिकरणत्वं तदीयसुखाद्यधिकरणत्वं चोपाधिः सुषुप्तिकालीने तच्छरीरानवच्छिन्ने न च तस्मिन्साध्याव्यापकत्वात् यदवच्छेदेन साध्यं तदवच्छेदेनोपाध्यनंगीकारे पक्षे साध्यसत्त्वेप्यविरोधात् न च देवदत्तसुखाद्यनधिकरणत्वमुपाधिः घटादावपि सत्त्वात्

मित्याशंक्याह । यदवच्छेदेनेति । एकावच्छेदेन हि साध्योपाध्योः साहचर्यं वाच्यं इतरथा साध्यस्यावच्छेदकभेदेनाप्युपाधिभावेन साहचर्यस्वीकारे साध्यवति पक्षेवच्छेदभेदेनापि तदभावोपपत्तौ तत्रोपाध्यभावेन साध्याभावानुमानायोगादुपाधेः दूषकता न स्यादित्यर्थः तर्हि यज्ञदत्तात्ममात्रे साध्यव्यापकं देवदत्तसुखानधिकरणत्वं तत्रोपाधिरित्याशंक्याह । न च देवदत्तेति । किं साध्यसमव्याप्तिकोयमुपाधिः विषमव्याप्तिको वा नाद्यः साध्याभाववत्यपि घटादावस्य सत्त्वेन समव्याप्त्यभावादित्युक्त्वा द्वितीये आह देवदत्तसु

स्थानधिकरणत्वं नामकिं तद्व्यधिकरणत्वं तदभावाधिकरणत्वं वा नाद्यः यज्ञदत्तात्मनि तदसंप्रतिपत्तेः द्वितीये देवदत्तात्मायज्ञद-त्तात्मनोभिद्यते देवदत्तसुखाभावाभाववत्त्वात् व्यतिरेकेण यज्ञदत्तात्मवत् इति प्रतिपक्षोन्नायकत्वं वक्तव्यं तच्चास्य हेतोरवच्छेदभेदेन सुखाभावसमानाधिकरण्यस्य देवदत्तसुखाभाववद्यज्ञदत्तात्माभेदेपि संभवादप्रयोजकत्वमिति न प्रतिपक्षतेत्यभिप्रेत्याह। सुखादेरिति। परमते ब्रह्मणो जीवान्तरस्य च यज्ञदत्तात्मभिन्नस्य सुखस्वाहमनुभवगोचरत्वात्तत्र हेतुद्वयस्य व्यभिचार इत्याशंक्याह। न च ब्रह्मणीति। तत्रापि साध्यस्य संदिग्धतया पक्षतुल्यत्वात्तत्तस्य पक्ष इव पक्षतुल्येपि न व्यभिचार इत्यर्थः एतेनास्यविरुद्धत्वमपि निरस्तं विपक्षाद्वृत्ति-

सुखादेरव्याप्यवृत्तिस्वभावतया पक्षेसाध्ये सत्यपि तदुपपत्तेश्च नच ब्रह्मणि विष्णुमित्रादौवाव्यभिचारः पक्षसमत्वात् ब्रह्मणि प्रथमहेतोरभावाच्च अन्वयव्यतिरेकाभ्यामहमित्यनुभ

त्वादेव पक्षविपक्षमात्र वृत्तित्वरूपविरुद्धस्याप्यसंभवात् किंच दुःखादिधर्म्यहंकारस्य स्वतोहमनुभवविषयत्वं तत्तादात्म्यादात्मनः तद्वि-षयत्वमिति तद्रहिते ब्रह्मणि तद्विषयत्वरूपहेतोरभावान्नव्यभिचार इत्याह। ब्रह्मणीति। द्वितीय हेतोरपि यथाश्रुतस्य विवक्षितस्य च ब्रह्मणि भावात्प्रथमेति प्रदर्शनार्थमिति द्रष्टव्यम् ननु लाघवाच्चेतनमात्रस्याहमनुभवविषयत्वाद्ब्रह्मणि तदभावोसिद्ध इत्याशंक्याह। अन्वयव्यतिरेकाभ्यामिति। जाग्रत्स्वप्नयोरहंकारे सत्यहमित्याकारानुभवदर्शनात्सुषुप्तौतन्नये तददर्शनादहंकारस्याहमनुभवविषयत्वमा-वश्यकं तस्य च परमप्रेमास्पदादिस्वभावप्रत्यगात्मतयानुभवादहंकारतादात्म्यापन्नप्रत्यगात्मनोपि तद्विषयत्वं तद्द्वारकमित्यहंकाररहिते

ब्रह्मणि तद्विषयत्वं न संभवतीत्यर्थः ब्रह्मण्यनहंकारत्वमसिद्धमित्याशंक्याह न तावज्जीवानां ब्रह्माहंकारे किंचित्प्रमाणमस्ति परकीया-
हंकारस्य परप्रत्यक्षत्वाद्ब्रह्मण्यहंकारसाधकलिंगाद्यभावाच्च प्रत्युत अहमकर्तयितव्यं नैव च लिंगं अनामरूपं निरहंप्रपद्ये इत्यादिवच-
नात्तदभावनिश्चयाद्ब्रह्मण्यहंकारो नास्तीत्यर्थः नाप्यहमात्मागुडाकेश अहमादिश्च मध्यंचेत्यादौ परमेश्वरप्रयुक्ताहंशब्दानुमिततदीयप्र-
त्यक्षं तदहंकारे प्रमाणमिति युक्तं उक्तविधया तस्य तत्र मुख्यार्थासंभवान्मायाशबलब्रह्मस्वरूपमेवाहंकारकारणं तेन लक्षणया बोध्यत इ-
त्याशयेनाह । क्वचिदिति । एवमुक्तहेतोरनैकान्तिकतां निरस्य कालातीततां निराकरोति । नापीति । किमत्र प्रत्यक्षं बाधकमनुमानं

वस्याहंकारविषयतया क्लृप्तस्यानहंकारे तस्मिन्नयोगात् न च ब्रह्मण्यहंकारे किंचित्प्रमा
णमस्ति क्वचित्तस्मिंस्तच्छब्दप्रयोगस्य लाक्षणिकत्वात् नापिबाधः प्रत्यक्षतोनोपाधिकात्म
भेदाप्रतीतेः नापितस्मिन्नकिंचिल्लिंगमस्ति सुखाद्यनुसंधानाननुसंधानव्यवस्थाया अनुपदमे

वार्थापत्तिर्वागमो वा तदनुपपत्तिर्वेतिविकल्पक्रमेण निराकरोति।प्रत्यक्षइत्यादिना नवाधिकेत्यंतेन।देवदत्तो यज्ञदत्तो नेत्याद्याकारेण
शरीराद्युपाधिकभेदस्यैव प्रतीतेर्न निरुपाधिकस्तद्भेदोप्रत्यक्षगोचर इत्यर्थः । नापि लिङ्गमिति । निष्कृष्टाहंकारे निर्विशेषात्मनि लिङ्ग-
स्यासंभवात् संभावितस्याप्यनन्तरमेव प्रतिपक्षनिरासावसरे निरशिष्यमाणत्वाच्चेति भावः अर्थापत्तिनिरासाय सुखादीत्याद्युक्तं तत्र प्रथ- ३५
ममौपाधिकभेदेनैवेति प्रयोक्तव्यं अस्य सत्प्रतिपक्षतां निराकर्तुं प्रथमं प्रतिपक्षानुमानं शंकते । नन्विति । तस्य यज्ञदत्तस्य यद्दुःखं तत्

स्मरणशून्यत्वादिति हेत्वर्थः न च यज्ञदत्तदुःखविषयपरोक्षज्ञानवतो देवदत्तस्य तत्स्मरणसंभवादसिद्धो हेतुरिति वाच्यं तद्दुःखविषयपरोक्षज्ञानशून्यस्यैव पक्षत्वे नोक्तदोषाभावादिति भावः ननु तस्य तदनुभवाभावादेव स्मरणं न भेदादित्यप्रयोजकत्वमित्याशंक्याभेदे तदनुभवस्याप्यावश्यकतया तत्स्मरणापत्तिरिति बाधकमाह । अन्यथेति । स्वतो भेदेप्यन्तःकरणाद्युपाधिकभेदादन्यस्य सतोन्यदुःखाननुभवितृत्वोपपत्तेरप्रयोजकता तदवस्थेत्याशंक्याह । न चौपाधिकेति । किमुपाधिगत एवान्यत्रात्मनि प्रतीतेरौपाधिक इत्युच्यते तदतिरि-

व वक्ष्यमाणत्वात् नापिश्रुतिबाधः अंतःकरणाद्यविशिष्टात्मभेदस्यश्रुतौ क्वाप्यदर्शनात् बंधमुक्तव्यवस्थाकर्मण्यधिकारानधिकारादिव्यवस्था चांतःकरणादिविशिष्टभेदेप्युपपद्यत इतिन बाधिका ननुदेवदत्तात्मायज्ञदत्तात्मप्रतियोगिकानौपाधिकभेदवान् तद्दुःखाननुसंधातृत्वात्संमतवदन्यथाहेतूच्छित्तिःनचौपधिकभेदेनाप्युपपत्तेरप्रयोजकताउपाधिभेदातिरिक्तऔपाधि

36

क्तभेदो वा आद्ये तव देवदत्तयज्ञदत्तात्मभेदाभावादनुसंधानादिव्यवस्थानुपपन्नेत्यभिप्रेत्य द्वितीय आह । उपाधिभेदेति । घटाकाशादौ जलचन्द्रादौ चोपाधिकभेदानुभवस्य सविशेषणे हि विधिनिषेधाविति न्यायेनोपाधिभेदविषयतयान्यथासिद्धेस्तदतिरिक्ताकाशादिभेदे मानाभावादात्मन्यपि तदभावः सिद्ध इति न तदधीनानुसंधानादिव्यवस्थेत्यर्थः किं च भेदस्यौपाधिकत्वमुपाधिजन्यत्वं तज्ज्ञाप्यत्वं वा तदधीनसंबन्धवत्त्वं वा नाद्यः भेदस्यानादित्वात्तदानीमपि स एवायमिति प्रत्यभिज्ञाप्रमिताभेदे सति तद्भेदासंभवाच्च द्वितीये भेदज्ञा-

नस्य प्रमात्वे तद्विषयसत्यभेदस्यात्मन्यावश्यकत्वान्मदिष्टसिद्धिस्तथाप्याकाशादौ तत्प्रसङ्गश्च तस्य भ्रमत्वे च भ्रमविषयभेदस्यात्मन्यभावा-
त्तदधीनव्यवस्थाया असंभवादन्यथा तस्य भ्रांत्यत्वायोगात् तृतीयभेदे स्वरूपातिरिक्तसंबन्धासंभवात्तस्य चानादित्वेनोपाध्यधीनत्वायोगा-
त्तस्मादौपाधिको भेदो न संभवतीत्याशयेनाह । असंभवाच्चेति । एवमननुसंधानादिव्यवस्थानुपपत्त्या पूर्ववादिना प्रतिपक्षहेतोरप्रयोजक-
त्वे निरस्ते सिद्धान्ती तावदनुसन्धानादेरात्मधर्मत्वमुपेत्य सोपाधिकभेदेनाप्युक्तव्यवस्थोपपत्तेरप्रयोजकत्वं तदवस्थमिति प्रतिपक्षानुमानं
दूषयति । नेति । औपाधिकभेद एवासंभवतीत्युक्तमित्याशंक्य तात्त्विकस्य तस्यासंभवेऽप्यनिरूपितरूपः सोऽभ्युपेयः अन्यथा त्वदीयव्यव-

कभेदस्याननुभवात् असंभवाच्चेति चेन्न औपाधिकभेदाभावे कस्य तर्ह्यनुसंधानमापाद्यते सि
द्धांते देवदत्तयज्ञदत्तात्माभेदेन यज्ञदत्तानुभवस्यैव तदीयत्वात् नचदेहस्यानुसंधातृत्वमस्ति

स्थाया एवासंभवात्तदनुपपत्तेर्दूरापेतत्वादित्याह । औपाधिकेति । अनुसंधातृत्वतदभावयोर्व्यवस्थानामपरस्परभिन्नाधिकरणत्वं तत्त्वात्मै-
क्यवादिनो संप्रतिपन्नमिति देहादतिरिक्तात्ममात्रस्य सर्वदुःखानुसंधानापादनमिष्टमित्यर्थः देवदत्तादिशरीरभेदेन व्यवस्था किं न ३६
स्यादित्याशंक्याचेतनस्य स्मर्तृत्वाद्यभावात्तदुपाधिकात्मभेदाभावे शिरःपादादिवत्तस्य तद्व्यवस्थायामप्रयोजकत्वमित्याह । न च
देहस्येति । ऐकात्म्यमते प्रवृत्तिसांकर्याभावसिद्धये तद्धेतु प्रयत्नादेरप्यसांकर्यरूपाव्यवस्था स्थेया ततश्च तदधिकरणात्मभेदसिद्धिरिति
तथा यज्ञदत्तशरीरोत्पन्नज्ञानादिना देवदत्तशरीरेऽपि प्रवृत्तः स्यादिति शंकते । देवदत्तेति । प्रवर्तेतेति देवदत्तज्ञानगोचर इति शेषः

किं परमते ज्ञानादिकमव्याप्यवृत्तिः व्याप्यवृत्तिर्वा आद्ये ऐकात्म्येपि यज्ञदत्तशरीरावच्छिन्नात्मप्रदेशे तु तज्ज्ञानादेरभावादेव त-
त्कारणकप्रयत्नवदात्मसंयोगि कारणिकाक्रियायज्ञदत्तशरीर एव जायते देवदत्तशरीरावच्छिन्नात्मप्रदेशे तु तज्ज्ञानादेरभावादेव तत्का-
रणकप्रवृत्तेरप्यभावोपपत्तावात्मभेदो न कल्प इत्याह । न तच्छरीरेति । विपक्षे बाधकमाह । मृतशरीर इति । एवं सति मरणान्तर-
मेव प्रेतशरीरप्राप्तस्य तत्रत्यज्ञानादिना मृतशरीरप्रवृत्त्याद्यापत्तिर्न तथा दृश्यत इत्यर्थः न द्वितीयः अपसिद्धान्तापत्तेरित्याह । न चाप-

देवदत्तशरीरेणापितज्ज्ञानात्प्रवर्त्ततेतिचेन्नतच्छरीरप्रवृत्तोहि तदवच्छिन्नात्मप्रदेशसमवायि
ज्ञानं कारणंमृतशरीरे प्रवृत्त्यदर्शनात् नच यज्ञदत्तशरीरावच्छिन्नज्ञानं देवदत्तशरीरावच्छिन्ना
त्मप्रदेशवृत्ति नचा परमते ज्ञानं व्याप्यवृत्ति नच मृतशरीरे मनःसंयागविरहान्न प्रयत्ना
दिकमिति वाच्यम् प्रेतशरीरावच्छिन्ने तस्मिंस्तस्य सत्त्वात् यज्ञदत्तज्ञानजनकमनःसंयोगादे

रमत इति । ज्ञानस्य व्याप्यवृत्तित्वेपि मृतशरीरवदात्मनि मनःसंयोगाख्यकारणाभावादेव तत्र प्रयत्नाद्यभावो न ज्ञानाभावादि-
त्याशंक्याह । न च मृतेति । किं मृतशरीरवदात्ममात्रे मनःसंयोगाभावः उत तदवच्छिन्नात्मप्रदेशे नाद्य इत्याह। प्रेतेति । द्वितीये त-
द्देव यज्ञदत्तदेहोपहितात्मवृत्तिज्ञानजनकः मनःसंयोगस्य देवदत्तदेहोपहितात्मन्यभावात्तत्र यज्ञदत्तस्य न प्रवृत्त्यादिप्राप्तिरित्याह ।
यज्ञदत्तेति । देवदत्तशरीरावच्छिन्नात्मनि यज्ञदत्तज्ञानजनकमनःसंयोगाभावेप्यन्यमनःसंयोगस्य सत्त्वात्तत एव यज्ञदत्तज्ञानगोचरे

देवदत्तस्य प्रवृत्तिः स्यादित्याशंक्याह । तस्य चेति । देवदत्तादिदेहावच्छिन्नात्ममनःसंयोगस्येत्यर्थः मनःसंयोगस्य स्वजन्यज्ञानद्वारातद्गोचर एव प्रवर्तकत्वादेतज्जन्यज्ञानस्य यज्ञदत्तज्ञानगोचरविषयत्वाभावेन नायं तत्र प्रवृत्तिहेतुरित्यर्थः ननु कृतिसाध्यत्वज्ञानस्य प्रवर्तकत्वात्तव मते शरीरान्तरोत्पन्नतज्ज्ञानस्य स्वसमानाधिकरणशरीरान्तरसंबन्धिकृतिविषयत्वसंभवात्ततः शरीरान्तरेपि प्रवृत्तिः स्यादिति नेत्याह । ज्ञानस्येति । प्रवर्तकज्ञानस्येत्यर्थः असन्निकृष्टो यः शरीरान्तरावच्छिन्नआत्मा तद्धर्मस्तद्गता वृत्तिस्तदविषयत्वादित्यर्थः मनःसन्निकर्षस्य ज्ञानद्वारास्वाश्रयात्मप्रदेशे एव कृतिजनकत्वात्तस्या एव स्वसमानप्रदेशवृत्तिप्रवर्तकज्ञानविषयत्वात्

देवदत्तशरीरेप्यभावात् तस्य च मनसः संयोगस्यस्वजन्यज्ञानगोचरएव प्रवर्त्तकत्वात् ज्ञानस्य स्वजनकमनसा सन्निकृष्टशरीरांतरावच्छिन्नात्मधर्मागोचरत्वात् अतएव बालादिशरीरभेदेपि यथानुसंधानं तथा देवदत्तयज्ञदत्तयोरपि स्यादिति प्रत्युक्तम् येनमनसा यदनुभूतं ते

प्रदेशान्तरवर्तिकृतेः प्रदेशान्तरवर्तिज्ञानजन्यत्वायोगात् सा न तद्गोचर इति नोक्तातिप्रसङ्ग इत्यर्थः एवमेकस्यात्मनः स्वरूपेण सर्वसुखाद्यनुसंधातृत्वेप्यवच्छेदभेदेन व्यवस्थिताप्रवृत्तिर्घटत इत्युक्तं संप्रत्यैकात्म्ये शरीरभेदेपि बाल्यादिशरीरेनुभूतस्य स्थविरशरीरेऽनुसंधानवद्देवदत्तादिशरीरेणानुभूतस्य शरीरान्तरेप्यनुसन्धानं स्यादित्याशंकां निराकरोति । अत एवेति । अतःशब्दार्थमेवाह । येनेति । उभवादिसंमतान्तःकरणैक्यतदभावाभावाभ्यामेवोभयत्रापि देहभेदेपि देहान्तरानुभूतानुसंधानाननुसंधानव्यवस्थोपपत्तेर्गौरवादप्रयोजक- ३७

त्वाच्च नात्मभेदोपि कल्प्य इत्यर्थः येन मनसैत्युक्तनियमस्य व्यभिचारं शंकते । नन्विति । प्रमाणाभावादिति मनसश्चानंत्येन जन्मान्त-रेऽन्यस्य मनसः संभवादितिशेषः जातमात्रस्य गोवत्सादेः स्तन्यपानादौ प्रवृत्तिदर्शनात्तद्धेतोरिष्टसाधनताज्ञानस्य जन्मान्तरानुभूतेष्टोपायत्वस्मरणान्यस्यासंभवात्तत्स्मरणे मनोन्तरजन्यत्वात् कथमुक्तनियम इत्यर्थः परमते बालादिदेहभेदेप्यन्तःकरणैक्याभ्युपगमात्तद्वदेव जन्मान्तरेपि तदभेदोपपत्तेरुक्तनियमसिद्धिरिति परिहरति । न तद्भेद इति । देवदत्तादिदेहभेदे मनोभेददर्शनाद्भिन्नकालीनदेहभेदेपि मनोभेदः संभवतीत्याशंक्योभयथासंभवेपि बाल्याद्यनुभूतस्मरणादाविव जातमात्रस्य स्मरणेपि तन्मूलानुभवजनकमनोजन्यत्वमेवयुक्तं तस्यक्,-

नैव तस्य स्मरणमिति स्थितावनतिप्रसंगात् ननु सर्वस्मिन्नजन्मनि मनएकमित्यत्रप्रमाणाभावात्कथं जातमात्रजन्मांतरानुभूतस्मरणमिति चेत् न तद्भेदेपि प्रमाणाभावात्संशये तु स्मरणबलादेकमिति कल्प्यतां आत्मभेदकल्पनायागौरवात् करणगणवेष्टितस्यैवात्मनःपरलोकगम

नत्वादित्याह । संशयइति । आत्मैक्यादेव स्थविरादौ जन्मान्तरे च देहान्तरानुभूतस्मरणं नान्तःकरणैक्यादिति किं न स्यादित्याशंक्य तथा सतात्मभेदः स्मरणाभावप्रयोजको वक्तव्यः तथा च गौरवमित्युक्तमित्याह । आत्मभेदेति । जन्मान्तरेभेदाभेदसंशयं स्वीकृत्यत्वाच्च वाद्भेद उक्तः संप्रतिससमानः सन्नुभौ लोकावनुसंचरति तमुत्क्रामंतं प्राणोनुत्क्रामतिप्राणमनुत्क्रामन्तं सर्वेप्राणा अनुत्क्रामन्तीत्यादिना पूर्वलिङ्गपरिवेष्टितस्यैव जीवस्य लिङ्गाश्रिताविद्याकर्मादिवशाद्देहान्तरप्राप्तिश्रवणात्तदभेदेन संशय इत्याह । करणगणेति । तस्यान्तःक-

रणाभेदस्य न चैव सिद्धान्ते सुषुप्तौ मनसो नष्टत्वे नाद्यह्यस्तनुवस्तुगोचरस्मरणानुपपत्तेरिति वाच्यं तदापीति: संसारव्यपदेशादिति न्याये न स्वापादविवेचनीयसूक्ष्मरूपेणावस्थितस्यैव लिङ्गस्य पुनर्जाग्रदादावुद्भवस्वीकारेण स्मरणाद्यभावप्रयोजकतद्भेदाभावादिति भाव: एवं वाल्याद्यवस्थासु देहभेदमंगीकृत्य मनस एकत्वादनुसंधानादिव्यवस्थोपपत्तिरित्युक्तं इदानीमङ्गीकारं परित्यजति । वस्तुतस्त्विति । सएवाहं चैत्रपुत्र: स एवायं ब्राह्मण इति स्वपरप्रत्यभिज्ञादर्शनादित्यर्थ: उपपत्तितोपि वाल्यादिशरीरैक्यमुपपादयति एकस्य न युगपदनेकदेहसंयोग: अदर्शनादप्रयोजनादसंभवाच्च क्रमेण च देहभेदे पूर्वपूर्वनाशे सत्येवोत्तरोत्तरोत्पत्तिर्वक्तव्या तत्र किं प्रारब्धकर्मनाश: पूर्वनाशे

## नागमनादिप्रतिपादकश्रुत्या तस्यासिद्धत्वाच्च वस्तुतस्तु नबालादिशरीरं भिद्यते प्रत्यभिज्ञाना त्तज्जनकादृष्टे सति तन्नाशायोगात् नाशकांतराभावाच्च प्रथमशरीरे क्लृप्तजनकादिव्यापा

कारणं समवाय्यसमवाय्यन्यतरनाशो वा नाद्य: तस्य यावज्जीवभोगसुखाद्युत्पादनाद्यशरीरारंभकत्वेन तत्पूर्वं तन्नाशायोगादित्यर्थ: द्वितीयस्त्वनुपलब्धिपराहत: न च वाल्यादिशरीरसंस्थानभेदात्तदारंभकावयवसंयोगभेदे पूर्वसंयोगनाश: कल्प्य इति वाच्यं सत्यपि पूर्वसंयोगेऽवयवान्तरयोगादेव संस्थानभेदोपपत्तेरित्याशयेनाह । नाशकान्तरेति । उत्तरदेहस्यापि प्रथमदेहे क्लृप्तकारणादेवोपपत्ति: कारणान्तराद्वा नोभयथापीत्याह प्रथमशरीर इत्यादिना द्वितीयादिशरीरस्येत्यस्य काकाक्षीन्यायेन पूर्वोत्तरवाक्याभ्यामन्वय: अत्र प्रथमेऽनुपलंभविरोध: द्वितीये विशिष्टपित्रादिजन्यत्वस्य ब्राह्मणादिप्रयोजकत्वाद्द्वितीयादिदेहे पित्रादिव्यापाराभावात्ब्राह्मण्यादिव्यवस्थापत्तौ स-

दधीनव्यवहारनियमो नस्यादित्यर्थः ननु बाल्यादिव्यवस्थापन्नादेहाः परस्परं भिद्यन्ते भिन्नपरिमाणवत्त्वात् कुचलामलकविल्ववत् इत्याशंक्य व्यभिचारेण दूषयति । परिमाणेति । एकस्मिन्नपि शरीरमूले स्तंभः स्थूलोग्रे सूक्ष्म इतिवत्तत्तदवयवावच्छिन्ने युगपन्नानापरिमाणदर्शनादेकत्र जलौकादौ क्रमेण नानापरिमाणदर्शनाच्च न परिमाणभेदो द्रव्यभेदव्याप्तः न च तत्रावयवपरिमाणानामेव नानात्वेन त्वचयविपरिमाणस्येति वाच्यं शरीरत्वसमानाधिकरणानुभवविरोधात् पाणिपादांगुल्याद्यवच्छिन्नावयविन्येकविधपरिमाणान्तराननुभवादसंभवाच्च वेष्टितं प्रसारितकटादावुपविष्टोत्थितदेहादौ च परिमाणभेदानुभवस्य बाधकाभावात्क्वचित्परिमाणेप्ययावद्द्रव्यभावित्वाव्या-

रामावात् द्वितीयादिशरीरस्यब्राह्मणादेरनुत्पत्तौजातिकुलगोत्रादिव्यवस्थासंभवात्
परिमाणस्यनिर्वचनीयस्थाङ्गुल्यग्रहृदयाद्यवच्छिन्नशरीरेसंकुचतविस्तृतपटादिपरिमाणभे
९१ दवदाश्रयभेदानियतत्वात् तस्मात्पररीत्याप्यैकात्म्येनानुसंधानादिप्रसंगः वस्तुतस्तु अवच्छे

प्यवृत्तित्त्वयोः पार्थिवरूपादिविशेषवदुपपत्तेश्च परिमाणभेदो न द्रव्यभेदनियत इति भावः पराभिमतात्मन एकत्वेप्यन्तःकरणभेदादेवानुसंधानादिव्यवस्थावत्तदधीनकर्तृत्वभोक्तृत्वव्यवस्थाया अप्युपपत्तेरात्मभेदो न कल्प्य इत्युपसंहरति । तस्मादिति । नानुसंधानादिप्रसङ्गोनुभवरहितश्चेति शेषः एवं पररीत्यैव परमतेप्यात्मभेदं निरस्य वस्तुतत्त्वमाह । वस्तुतस्त्विति । एवं च देवदत्तादीनां शरीराद्यवच्छेदभेदेन भिन्नत्वान्नान्यानुभवादिना यस्य स्मरणादिप्रसङ्ग इति भावः यदि वाद्यवच्छेदकभेदं विनावच्छिन्नभेदाननुभवादित्यादि तत्राह ।

स्थूलेति । घटभेदेन हेच्छिद्रे इत्यवच्छिन्ननभसः स्वरूपतो भेददर्शनात्स्थूलसूक्ष्मघटाद्यवच्छिन्नाकाशयोर्भेदाभावे प्रेक्षावता सूक्ष्मावकाशं परित्यज्यबहुपदार्थस्थापयता स्थूलावकाशान्वेषणाद्युपपत्तेश्च तयोर्भेदोवश्यमभ्युपेयः स च यद्यप्यभेदसमसत्ताको न संभवति एकत्वाबाधितप्रत्यभिज्ञासिद्धवास्तवाभेदे सति तत्समसत्ताकभेदस्य विरोधात्तथाप्याकाशधर्मिकप्रतियोगिकभेदसाक्षात्कारस्य सविषयत्वाय स्थूलसूक्ष्मच्छिद्रेषु नियतसंख्याकसमानपरिमाणपदार्थस्थितिनियमायवा निर्वचनीयः सोभ्युपेयः अतः सविशेषणे हीत्यादिन्यायोनिर्वचनीयवादिनं प्रतिअसम्मतत्वादुपाधे विशेषणादन्यत्वाच्च नोदाहर्तव्य एतेनोपाधिजन्यत्वादिविकल्पासहत्वादौपाधिको भेदो दुर्निरूपइति

दकभेदादवच्छिन्नभेद इतिनकोपि दोषःस्थूलासूक्ष्मादिघटावच्छिन्नस्य दशविंशतिपदार्थाश्र यस्य नमसः स्वरूपकार्यभेदानुभवात् नभोमात्रस्य श्रोत्रत्वे सर्वशब्दोपलंभप्रसंगश्च तज्जा

निरस्तं अनिर्वचनीये निरूपणानर्हत्वस्य भूषणत्वात् वस्तुतस्तु उपाधिसंबन्धस्यागंतुकत्वेन तदधीनोत्पत्तिस्थितिकत्वमेव भेदस्यानिर्वचनीयस्यौपाधिकत्वं अनाद्यविद्योपाधिकजीवेशभेदस्य त्वनादितया जन्यत्वाभावादनादेरपि कार्यप्रागभावस्य परमते कारणाभावाधीनस्थितिकत्ववदौपाध्यधीनस्थितिकत्वमेवौपाधिकत्वमित्यनिर्वचनीयौपाधिकभेदादेवानिर्वचनीयसकलव्यवस्थोपपत्तिरिति भावः उपाधिभेदव्यतिरेकिणौपाधिकभेदानङ्गीकारे बाधकमाह । नभोमात्रस्येति । कर्णवलयावच्छिन्नं नभः श्रोत्रं तच्च स्वसमवेतशब्दग्राहकं इति हि परैरभ्युपेयते तस्य यदि तदवच्छिन्नान्नभसो न भेदस्तदा नभोमात्रं श्रोत्रमिति तेनैकस्य तत्समवेतसर्वशब्दोपलंभप्रसङ्ग इत्यर्थः सर्वशब्दानां श्रोत्रसमवायेपि तदुपलंभकादृष्टविशेषाभावान्न सर्वोपलंभ इत्याशंक्याह । तज्जातीयस्येति । दृष्टसामग्रीसंपादनद्वारैवैतादृशका-

र्थे दृष्टस्योपयोगादन्यथा पराभिमतमन आदिसिद्धिप्रसङ्गादिति भावः अदृष्टस्य साक्षाच्छब्दोपलंभहेतुत्वे बाधकान्तरमाह। नियमेनेति। सत्यपि शब्द इत्यस्यानन्तरमदृष्टाभावेनेति शेषः यत्राभावाधिकरणे तर्कितप्रतियोगिसत्त्वं तदनुपलब्धिविरोधितया तर्कितं शक्यं तत्र तदनुपलब्धिरभावग्राहिकेति परैरभ्युपेयते सत्यपि शब्दसमवायेऽदृष्टाभावात्तदनुपलंभे सति श्रोत्रे तर्कितस्यापि शब्दस्यानुपलब्धिविरोधित्वेन तर्कितुमशक्यत्वात्तदनुपलब्ध्या तदभावनिश्चयो न स्यादित्यर्थः ननु श्रोत्रवत्तद्गोलकसंबन्धस्यापि शब्दोपलब्धिहेतुत्वात्सर्वशब्दस्य च तत्संबन्धाभावादप्रतीतिरित्याशंक्याह। चक्षुर्गोलकादाविति। गोलकस्य साक्षात् ग्राह्यसंबन्धो न तद्ग्रहणहेतुः चक्षुर्गोलके तदभा-

तीयस्य ग्रहणेनादृष्टविशेषस्यापि सत्त्वाच्च नियमेनशब्दोपलंभस्यादृष्टसाध्यत्वे तदनुपलंभस्य शब्देसत्यपिसंभवेनतदभावानुभवायोगाच्च चक्षुर्गोलकादावदर्शनेन श्रोत्रगोलकसंबंधस्य साक्षात्काराहेतुत्वाच्च संयोगतदभावाधिकरणयोरौपाधिकभेदाभावेमूलत्वाग्रत्वयोरप्युभयसामा

वे दूरस्थवस्तुदर्शनात् श्रोत्रादिगोलके साक्षाच्छब्दादिसंबन्धाभावाच्च परंपरासंबन्धस्तु श्रोत्रं गोलके सर्वसाधारण इति सर्वग्रहणं दुर्वारमिति भावः किं च मूले वृक्षः कपिसंयोगी अग्रे नेति मूलत्वाद्यवच्छेदेनैव संयोगस्याग्रत्वावच्छेदेनैव तदभावस्यानुभवाद्विरुद्धयोस्तयो युगपदेकवृत्तित्वायोगाच्च मूलाग्रवृक्षयोर्भेदोऽभ्युपेयः मूलाग्रत्वावच्छिन्नवृक्षभेदाभावे च तयोरपि संयोगतदभावोभयसमानाधिकरणत्वादुक्तवत्वादिवदेकैकमात्राधिकरणतावच्छेदकत्वायोगात् भावाभावयोरसांकर्यानुभवो न स्यादित्याह। संयोगेति। एवमौपाधिकभेदं प्रसाध्य

तस्य सत्यत्ववादिनमेकदेशिनं प्रत्याह । सचेति । अबाधितेति च्छेदः भेदाभेदयोर्विरुद्धयोरेकत्र सत्त्वायोगेनैकत्र परस्याध्यस्तता वाच्या तत्राभेदस्य स्वरूपत्वेन निरपेक्षस्य प्रत्यभिज्ञासिद्धस्य त्रैकालिकत्वेनाधिष्ठानत्वसंभवात्तत्राध्यस्तभेदस्य धर्म्यादिसापेक्षस्य न सत्यतेत्यर्थः एवं स्वमते निर्वचनीयभेदेन तादृशव्यवहारव्यवस्थामुपपाद्य परमते तदनङ्गीकाराद्भावाभावाद्व्यवस्थितत्वायोगात्तदधीनव्यवस्थितव्यवहारविप्लवः स्यादित्युपसंहरति । अनिर्वचनीयस्त्विति । नास्त्येवेत्यत्र तन्मत इति शेषः एवं तावदेकात्मन एवसुखदुःखाद्याश्रयत्वं स्वीकृत्यावच्छेदकान्तःकरणादिभेदेन तदुपाधिकसाक्षिभेदेन वा सर्वानुभवानुसंधानादिव्यवस्थेत्युक्तं संप्रति कामः संकल्प इत्यादिश्रुतेः परिशेषा-

नाधिकरण्यनियमेनैकतरावच्छेदेनैकतरस्यानुभवो न स्यात् सचावच्छिन्नभेदोऽबाधितस्वरूपप्रत्यभिज्ञानाद्वास्तवोनभवति अनिर्वचनीयस्तु परस्यनास्त्येवेति सर्वोपिव्यवहारोदत्तजलांजलिरेव अंतःकरणस्यैव सिद्धांते सुखाद्युपादानत्वादपि नातिप्रसंगः अतएव न पदार्थत्वा-

नुमानाच्च सुखादेर्मनोधर्मत्वे सिद्धे परमतवदाश्रयभेदेन तदुपाधिकसाक्षिभेदेन च सर्वव्यवस्थाघटत इत्याह । अन्तःकरणस्यैवेति । उक्तविधया कल्पितभेदेनापि सर्वव्यवस्थोपपत्तेर्जीवोब्रह्मप्रतियोगिकभेदवानपदार्थत्वादित्याद्यनुमानं भेदमात्रसाधने सिद्धसाधनं वास्तवभेदसाधने चाप्रयोजकमित्याशयेनाह । अत एवेति । आगमबाधितत्वाच्च प्रतिपक्ष्यानुमानदौर्बल्यमाह । सर्वेषामिति । याज्ञवल्कीयव- ४०
चने दृष्टान्तद्वयमवच्छिन्नरूपः प्रतिबिंबरूपो वा जीव इति मतद्वयेपि भेदो मिथ्यैवेत्यभिप्रायेणोपात्तमिति द्रष्टव्यं एवं जीवभेदसत्यत्वे प्र-

माथाभावमुपपाद्यजीवस्वरूपपर्यालोचनयापि तदसंभवं वक्तुं तस्य तावदणुत्वं निराकरोति । किंचेति । देवदत्तात्मा जीवो नाणुः त-त्प्रत्यक्षविषयत्वात् घटादिवदित्यभिप्रेत्य विपक्षे बाधकमाह । सर्वाङ्गेति । गंधवत्सुखादेरपि स्वाश्रयसंबंधंविनाप्यन्यत्र प्रसराच्छरीरव्या-पितेत्याशंक्योक्तम् । युगपदिति । एकस्मिन्देहेणुजीवबहुत्वे तेषामैकमत्यस्य नियमेनासंभवाविरुद्धादिक्रियया देह उन्मथ्येत तदेकत्वे तु तस्य व्यवहितावयवद्वयं युगपत्संबन्धाभावाद्धस्तद्वयाङ्गुलिमात्रे युगपदनुभूयमानानेकप्रयत्नस्य शिरोमात्रे पादमात्रे च युगपद्व्यवस्थितसुख-

दिकमपि भेदसाधकं सर्वेषामेवभेदहेतूनां नान्योतोस्तिद्रष्टा एको देवइत्यदिश्रुत्या आकाशमेकं हियथा घटादिषु पृथग्भवेत्तथात्मैकोप्यनेकः स्यातजलाधारेष्विवांशुमानिति याज्ञवल्क्यवचनेन ममांतरात्मा तव च येचान्येदेहसंगिताः सर्वेषां साक्षिभूतोसौ न ग्राह्यः केनचित्क्वचिदित्यादि भारतादिवचनेन बाधश्च किंच जीवोनाणु सर्वांगव्यापि सुखादेर्युगपद्विच्छिन्नदे

दुःखयोश्च सर्वजनीनानुभवो न स्यात् दृष्टान्तोप्यसंप्रतिपन्न एव उपलभ्यासु चेद्गंधं केचिद्ब्रूयुरनैपुणाः पृथिव्यामेवं न विद्यादपो वायुं च संश्रितमिति न्यायमूलबादरायणवचनाद् गंधस्य जलादावाश्रयानुवृत्तिकल्पनवदन्यत्रापि तत्कल्पनादिति भावः एवं जीवस्य ब्रह्मतां विना स्वतो विभुत्वमनुपपन्नमित्याह । नापीति । विभुत्वस्य द्रव्यत्वावान्तर जात्यनाश्रयत्वेन गगनादौ व्याप्तिदर्शनाज्जीवस्यापि विभुत्वे तदभावप्रसंगान्न स्वतो विभुत्वमिति ब्रह्मात्मनैव तद्वक्तव्यं तथा च मदिष्टसिद्धिरित्यर्थः किं चैकात्म्यवादे भोगसांकर्यं परिहृतमेव घनं-

तद्विम्वात्मवादे तु सर्वेषां सर्वे भोगसांकर्यं दुष्परिहरमेवेत्याह । सर्वशरीर इति । नन्वेकैकस्य सर्वशरीरसंयोगेपि तत्तददृष्टारब्धेशरीरे तस्य तद्भोगनियमान्नातिप्रसङ्ग इति नेत्याह । न च तददृष्टेति । एकैकदेहस्यैकैकात्ममात्रादृष्टारब्धत्वमङ्गीकृत्य तस्य स्वारंभकादृष्टाश्रय एव भोगहेतुत्वनियमो न युक्त इत्याह । अदृष्टं हीति । स्वकार्यमित्यत्र जनयतीत्यनुषङ्गः इतीत्यत्र नियम इत्यनुषङ्गः तत्र हेतुः । देवदत्ते ति । संयोगादिवदिति तत्क्रियाश्रयशरीरसंयोगादिवदित्यर्थः विभागादिरादिपदार्थः । अपूर्वभोगोपपत्ते रिति । देवदत्तशरीरेषा।त्मा-

शद्वये यत्नादेरननुभवप्रसंगात् नापि विभुःविभुत्वेगगनादिवदवांतरजात्यमुत्पत्तेःसर्वशरीरे युगपद्भोगप्रसंगाच्च नच तददृष्टारब्धशरीर एव तस्य भोग इति वाच्यं अदृष्टं हि स्वाश्रयए वं भोगं जनयतीति नियमः नत्वदृष्टकार्यमप्यदृष्टाश्रय एवस्वकार्यमितिदेवदत्तशरीरिक्रय या आत्मांतरे संयोगादिवदपूर्वभोगोपपत्तेः देवदत्तयत्नार्जितगृहादिवदन्यस्यापि तत्र स्वा

न्तर्गतादृष्टफलभोगोपपत्तेरित्यर्थः देवदत्तशरीरागततत्तीर्थस्नानादिक्रिययात्मान्तरेप्यपूर्वभोगयोरुपपत्ते रिति वार्थः । तदुक्तमदृष्टानियमा-दिति । स्वभोगाय देवदत्तोपार्जितदेहेन्यस्य भोगादि न युक्त इत्याद्यव्याख्यायामाशंक्याह । देवदत्तेति । देहे तददृष्टारब्धत्वस्य तद्भोग-नियामकत्वमङ्गीकृत्याप्याह । मृतशरीर इति । न च तत्र मनःसंयोगादिकारणाभावादेव न भोग इति वाच्यं मरणान्तरभाविपातना-देहादौ तत्सत्त्वादेवमपि प्रदेशान्तर्वर्तिहेतोर्न प्रदेशान्तरे फलोदय इत्याशंक्याह । प्रदेशान्तरेति । हृदयादिप्रदेशवृत्त्यणुमनसः आत्मसंयो-

गादित्यर्थः एवमेकैकदेहस्यैकैकादृष्टारब्धत्वमंगीकृत्य तस्य भोगनियमं प्रयोजकत्वमुताङ्गीकारं परित्यजति । पुत्रादीति । प्रजाकामो यजेत पशुकामो यजेतेत्यादिशास्त्रात्पुत्रादिदेहस्य पित्राद्यदृष्टेनापि जन्यत्वावगमात्पुत्रपश्वादिदेहेष्वपि विभोः पित्रात्मनो भोगःस्यात्पुत्रादेस्तु तत्र भोगेन स्यात्तद्देहस्य स्वादृष्टमात्रारब्धत्वाभावात् वस्तुतस्तु विभ्वात्मनानात्वमते सर्वात्मसंयुक्तशरीरादिगतक्रियाजनितादृष्टस्य तद्धेतुप्रयत्नादेवानियामकाभावादेकात्ममात्रवृत्तित्वानुपपत्तिः न च तन्मात्राश्रिते प्राक्तनादृष्टारब्धदेहादिजनितप्रयत्नादितस्यैवेति-नियमोपपत्तिरिति वाच्यं पुत्रादिदेहे तन्मात्रादृष्टजन्यत्वासंभवस्योक्तत्वात्प्राक्तनादृष्टमेतद्दीयमेवेत्यत्रापि नियामकाभावाच्च न चतदीय-

दृष्टाद्भोगसंभवात् अदृष्टानियमान्मृतशरीरेपि प्रसंगाच्च प्रदेशांतरवर्त्तिमनः संयोगाद्युगपद्दशांगुल्यवच्छेदेन दशप्रयत्नवन्मनुष्यशरीरावच्छिन्नात्मवृत्त्यदृष्टादन्यत्र भोगवन्मृतशरीरेपि तत्संभवात् पुत्रादिशरीरजीवनयोः पित्रदृष्टारब्धत्वाच्च प्रतिशरीरं भिन्नस्यात्मनोविभु

देहादृष्टयोः प्रवाहानादित्वात्सर्वत्र नियमोपपत्तिरिति वाच्यं तयोः क्वचिदपि कार्यकारणभावनियमस्याक्लृप्तत्वेनान्धपरंपरादोषापाताद्रमणीयचरणारमणीयां योनिमापद्यन्ते इत्यादिश्रुतिरपि यथा ह्ययं ज्योतिरात्मा विवस्वान् एक एव हि भूतात्मेति श्रुत्यनुरोधेनोपाधिपरिच्छिन्नजीवेष्वन्यतः सान्यहेत्वनुवादेन फलनियमविधिपरास्तस्माद्विभ्वात्मस्वदृष्टाधीनाभोगादिव्यवस्थेति मनोरथमात्रमिति भावः एवं भिन्नात्मनां विभुत्वेऽनुपपत्तिमुक्त्वा तत्र प्रमाणमपि नेत्याह । प्रतिशरीरमिति । किं तत्र प्रत्यक्षं प्रमाणमुतानुमानं नाद्यं तेन जीवे परिच्छि-

दस्यैवानुभवादित्याह । अहमिहैवेति । नचायमनुभवो देहादिविषय इति शक्यं तस्य प्राङ्गिरस्तत्वादित्यभिप्रेत्याबाधितेत्युक्तं जीवो वि-
भुः सर्वदास्पर्शरहितद्रव्यत्वान्नित्यैन्द्रियग्राह्यगुणाश्रयत्वाद्वा स्वद्वितीयक्षणनियतस्वविनाशसामग्रीकविशेषगुणवत्वाद्वा आकाशवदित्यनु-
मानं तन्मानमिति द्वितीयं कल्पं निराकरोति । सर्वदेति । प्रत्यक्षमहमिहैवेत्यनुभवः न च प्रत्यक्षस्य भ्रमत्वान्नानुमानबाधकतेति वा-
च्यं बाधकाभावे न तस्य भ्रमत्वासिद्धेः न चोक्तानुमानं बाधकं परस्पराश्रयापत्तेः विपक्षे बाधकाभावेनाप्रयोजकत्वाच्च आद्यहेतोश्च कै-
षां चिन्मते मनसि तमसि च व्यभिचारात् द्वितीयतृतीययोस्त्वस्मिन्मते पक्षदृष्टान्तयोरसिद्धत्वाच्चेति भावः नन्वस्मदादिभोगवस्तुनो देशा-

त्वे प्रमाणाभावाच्च अहमिहैवास्मिजानान इति तत्परिच्छेदस्यैवाबाधितानुभवसिद्धत्वात्
सर्वदास्पर्शरहितद्रव्यत्वादित्यादिहेतूनां प्रत्यक्षबाधात् अदृष्टस्याश्रयसंबंधं विनैव स्वमहि

न्तरादावुत्पद्यमानस्यास्मदहृष्टजन्यत्वाददृष्टस्य च स्वाश्रयानुवृत्तिं विना देशान्तरीयेण स्वतः संबन्धायोगात्संबधाभावे चादृष्टस्य जनकत्वा-
योगात्तदाश्रयस्याविभुत्वे तस्य देशान्तरादौ कार्यजनकत्वानुपपत्तिरिति नेत्याह । अदृष्टस्येति । परमते विभोरप्यात्मनो विभुनाकाशेन ४२
संबन्धाभावेपि स्वरूपसंबन्धादेवात्मगता दृष्टा यथाकाशे शब्दादिर्जायते तद्वत्परिच्छिन्नात्मसंयुक्तादृष्टादपि स्वरूपसंबन्धमहिम्नैव देशान्त-
रादौ कार्यजन्मसंभवति नचाकाशेप्यात्मसंयुक्तभेर्यादिद्वारापरंपरया दृष्टप्रत्यासत्तिरस्तीति वाच्यं परिच्छिन्नात्मसंयुक्ताकाशादिद्वारापि
सुलभेति सुधाविभुतोपगम इति भावः जीवस्याविभुत्वे स एकदा भवति त्रिधा भवति पंचधेत्यादिश्रुतेः आत्मनो वै शरीराणि बहूनि

भरतर्षभ योगीकुर्याद्बलंप्राप्यकैश्चित्तसर्वां मह्रीश्चरेत् १प्राप्नुयाद्विषयान्कैश्चिद्कैश्चित् दुर्गंतपश्चरेत् संक्षिपेत पुनस्तानि सूर्योरश्मिगणानि वेति स्मृतेश्च युगपदनेकदेहपरिग्रहविषययोः का गतिरित्याशंक्य तपोभूमिविद्यायोगविधिस्तुत्यर्थतया विरोधे गुणवाद इति न्यायेन विदुषः स्वच्छंदतामात्रपरत्वस्य वा सर्वात्मब्रह्मरूपेणोपासनापरत्वस्य वा त्वन्मतेन्यायत्वादित्यभिप्रेत्याह । कायव्यूहेति । अभेदश्रुतेस्तत्त्वमादि-श्रुतेः एवं जीवानां स्वतो विभुत्वे साधकाभावे बाधकं चोक्त्वा स्वतो मध्यमपरिमाणत्वे सावयवत्वादनित्यत्वप्रसंगेन तन्निराकुर्वन्कल्पित-

म्ना शब्दवत्कार्यांतरेपिजनकत्वसंभवाच्च कायव्यूहशास्त्रस्य प्रत्यक्षसिद्धपरिच्छेदानुरोधेनप रमतेभेदश्रुतेरिवान्यार्थत्वात्तस्माज्जीवाणुत्वविभुत्वयोरयोगात्स्वतोमध्यमपरिमाणत्वेऽनि त्यत्वापत्तेः सर्वात्मनोब्रह्मणःश्रुतिस्मृत्यादिसिद्धऔपाधिकदेशएवजीवइतिनजीवानामपिभे

१३ दः एतेनेदंनिरस्तंक्लृप्तप्रमाणासंभवेप्रमाणांतरंकल्पनीयं नत्वनुभवसिद्धभेदपरित्यागइति

भेदब्रह्मणोंशा एव जीवास्ततस्तद्भेदोपि न वास्तव इत्युपसंहरति । तस्मादिति । जीवपरभेदादौ प्रसिद्धप्रमाणाभावेपि समस्तमहाजन-सिद्धतत्प्रतीतिनिर्वाहाय प्रमाणान्तरं कल्प्यमिति ततस्तस्य सत्यत्वसिद्धिरित्याशंक्याह । एतेनेति । तद्दिवृणोति श्रुतिविरोध इति माना-न्तराविरोधे सत्येव हि कल्पनाप्रवर्तते ऽन्यथातिप्रसङ्गात् महाजनप्रसिद्धेश्च देहात्मप्रत्ययवदुपपत्तेर्भेदप्रतीतिमात्रस्य प्रबलाभेदश्रुतिबा-धितविषयत्वेन भ्रमत्वे सति तत्कारणतया क्लृप्ताज्ञानत एव तदुपपत्तेश्च न मानान्तरं कल्प्यमित्यर्थः भेदानुभवस्य भ्रमत्वे तदधीनत्वे-

लिकवैदिकव्यवहारा विफलाः स्युरित्याशंक्य तस्य यावद्बाधं व्यावहारिकप्रामाण्यान्न फलविसंवाद इति सदृष्टान्तमाह । भेदानुभवस्येति । तदुक्तं देहात्मप्रत्ययो यावत्प्रमाणत्वेन कल्पितः लौकिकं तावदेवेदं प्रमाणं त्वात्मनिश्चयादिति आत्मनिश्चयादसंसार्यात्मतत्त्वनिश्चयपर्यन्तमित्यर्थः एवं मानाभावादयुक्तश्चेति प्राचीनश्लोकोक्तमानाभावं प्रसाध्य निगमयति । तस्मादिति । इदानीमयुक्तश्चेत्येतद्विवृणोति । किं चेति । विभक्तादौ सर्वत्र नियमेन भेदव्यवहारदर्शनाद्विभागादेरपि परमते भेदत्वं संभवात् जीवादिभेदं वदन्प्रष्टव्यः किं सर्वत्र विभाग एव पृथक्त्वं वा वैलक्षण्यं वान्योन्याभावो वा वस्तुस्वरूपं वेति तत्र न प्रथमौ भवतः तयोर्गुणादावसंभवात् जीवेश्वरयोर्जीवानां च विभुत्वेन

श्रुतिविरोधैःभिन्नेपिभेदसंपादकतयाक्लृप्ताज्ञानेचसतितदयोगात् भेदानुभवस्य देहात्मभेद प्रत्ययवद्बाधप्रामाण्योपपत्तेः तस्मान्नास्तिभेदे प्रमाणं किंच विभागः पृथक्त्वंवा न जीवेश्वरभेदः तयोर्धर्मिद्वयप्रत्यक्षाधीनप्रत्यक्षत्वात् प्रत्यक्षातिरिक्तंचभेदे न किंचित्प्रमाणमित्युक्तं

विभागासंभवाच्चेत्यभिप्रेत्याह । विभाग इति । किं च किं तत्र प्रत्यक्षं प्रमाणमन्यद्वा न प्रथम इत्याह । तयोरिति । तयोर्विभागपृथक्त्वयोः तथाचेश्वरस्याप्रत्यक्षत्वात्तन्निरूपितयोस्तयोः प्रत्यक्षत्वायोग इत्यर्थः द्वितीये प्रागुक्त एव तन्निरासो द्रष्टव्य इत्याह । प्रत्यक्षातिरिक्तमिति । तृतीयं निरस्यति । नापीति । किं विविधलक्षणवत्त्वं वैलक्षण्यं विरुद्धलक्षणवत्त्वं वा न प्रथमः एकस्मिन्नपि पृथिव्यादावनेकविशेषगुणवति प्रत्येकमनेकलक्षणसत्त्वादित्याह । विविधेति । न द्वितीयः एकाधिकरणकत्वाभावलक्षणस्य नियमेन भिन्नाधिकरणकत्वलक्ष-

यस्य वा विरोधस्य तज्ज्ञानस्य च भेदान्तरतज्ज्ञानापेक्षत्वादन्योन्याश्रयान्न च परस्परात्यन्ताभावनैयत्यं धर्माणां विरोध इति वाच्यं तस्यापि धर्मिभेदाधीनत्वात्तस्मान्नायं भेदो न वा एतज्ज्ञानं भेदज्ञानं इत्याशयेनाह । विरुद्धेति । ब्रह्मवैलक्षण्यं चेदात्मनि ततो भेदस्तत्किमहंकारातिरिक्तात्मन्यस्तीत्युच्यतेऽहंकाररूपे वा आद्ये पि किं वस्तु उत तन्मात्रं नाद्यः धर्मिग्राहकमानेनाहंकारातिरिक्तात्मनः कूटस्थचिन्मात्रतया सिद्धस्य वास्तवब्रह्मवैलक्षण्याभावात् द्वितीयस्तु युक्तः प्रतिबिंबादौ व्यभिचारात् नापि प्रथमद्वितीयः इश्यत्वादि-

नापि वैलक्षण्यं भेदः विविधलक्षणवत्त्वस्यैकस्मिन्नपिसत्त्वात्विरुद्धलक्षणत्वस्यातिरिक्तभेदतद्ग्रहाधीनत्वात्अहंकारातिरिक्तआत्मनिब्रह्मविलक्षणत्वेप्रमाणाभावाच्चअहंकारश्चनात्मेत्युक्तं तस्मादन्योन्याभावः स्वरूपं वा भेदो वाच्यः तत्र न तावदन्योन्याभावः संभवति तत्प्रतियोगिप्रमाणयोरसंभवात् तत्र परमते न घटादिः प्रतियोगी अभेदविरोधिभेदस्य तदभा

नाहंकारानात्मत्वस्य साधितत्वादित्याह । अहंकारातिरिक्तेत्यादिना । एवं परेषां काशकुशावलंबनसमं पक्षत्रयं निरस्य तत्संमतं चतुर्थपंचमपक्षद्वयं परिशेषियत्वाचतुर्थंतावदसंभवेन दूषयिति तस्मादित्यादिना ननु भूतलादिघटादिनेति प्रतीते घटाद्येव प्रतियोगीत्याशंक्याह । तत्रेति । किं घटाद्येव तत्प्रतियोगितत्तादात्म्यं वा नाद्यः भेदस्याभेदविरोधितया तदभावत्वेन घटप्रतियोगिकत्वायोगादित्यर्थः घटस्यैव तत्प्रतियोग्यभेदत्वान्नोक्तदोष इत्याशंक्याह । न च घटादिरिति । अभावप्रतियोगिनोर्विरोधाभावे तदभावानुपपत्तेस्तयोर्विरोधो

वाच्यः सच तयोरेकदैकत्रावस्थानायोग्यत्वमेव तथा च घटाद्यधिकरणे तत्प्रतियोगिकाभावरूपतद्भेदायोगात्तयोरभेदः स्यान्नचान्योन्याभावातिरिक्ताभावस्यैव प्रतियोगिनोक्तविरोध इति वाच्यं लाघवेनाभावत्वस्यैव तत्प्रयोजकत्वात्पश्चादन्यचैवायं नियमइति सर्वत्र वक्तुं शक्यत्वेनानुमानकथोच्छेदप्रसङ्गाच्च वक्ष्यमाणविधयाप्रतियोग्यादिनि रूपणे नान्योन्याभावस्याप्यसिद्धत्वाच्चेति भावः द्वितीयं शंकते । तादात्म्यमिति । तदपि घटादिस्वरूपमेव तदतिरिक्तं वा नाद्यः प्रागुक्तदोषानपायात् इत्यभिप्रेत्यद्वितीयं निराकरोति । न तावदिति ।



वतया तदयोगात् नच घटादिरेवाभेदः तदधिकरणे तद्भेदाभावप्रसंगात् तादात्म्यं भेदप्रतियोगीतिचेत् नतावात्तदात्म्यं घटस्वरूपातिरिक्तं तत्र न तावत्घटइतिबुद्धेः प्रमाणं घटघटत्ववैशिष्ट्यादन्यस्य तदविषयत्वात् नापिघटोघटाभिन्न इति बुद्धिस्तद्विषया तस्याभेदाभावविषयत्वात्सएवतादात्म्यमितिचेत्तर्हि भेदतादात्म्ययोरन्योन्यज्ञानाधीनज्ञानतया नैक

तत्र प्रमाणाभावं हेतुमाह । तत्रेति । घटातिरिक्ततादात्म्ये घट इत्यनुभव एव मानं घटादयमभिन्न इत्यनुभवो वा नाद्य इत्युक्ताद्द्वितीयमपवदति । नापीति । घटतादात्म्यं किं तद्भेदाभावादतिरिक्तं स एवं वा आद्ये भिन्न इति बुद्धेर्भेदाभावगोचराया न तादात्म्यसाधकतेत्याह । तस्या इति । द्वितीयं शंकते । स एवेति । तत्र किं भेदाभावमेव तादात्म्यमुत भेदस्वभावमपि आद्ये भेदस्याप्यभेदाभावमात्रस्वभावं तयोभयज्ञानस्याप्यन्योन्यज्ञानाधीनतापत्तावेकोपि न सिध्येत्परैरभावयोः परस्परविरहात्मत्वस्यानभ्युपेतत्वाद्वित्याशयेनाह । तर्हीति । 

उक्तदोषं परिहरन्द्वितीयपक्षमाशंक्य निराकरोति न च घटाभावेत्यादिना अभेदस्य भावस्वभावत्वे बाधकाभावात्सोभ्युपेय इति कथं तदभाव इत्याशंक्य तत्साधकस्याप्यभावान्मैवमित्याह । न च तत्रापीत्यादिना पृथग्घटतादात्म्यज्ञानादर्शनेपि तस्य घटज्ञान एव प्रकारतया सिद्धिरित्याशंक्याह । न च घट इति । किं सर्वस्मिन् घटसविकल्पके सप्रकारः उत क्वचिदेव स्वविषयनिर्विकल्पकजन्ये नाद्य इत्याह घटत्वेति भानायोगादिति तस्य प्रागनुपस्थिततया प्रकारत्वायोगादित्यर्थः द्वितीये घटे पृथग्बुद्धोदराकारत्ववत्किं सखण्डता-

मप्यनुभूयेत नच घटाभावाभावोघट इव भेदाभावोप्यभावोपस्थितिं विनैव ज्ञायत इति वाच्यं घटेघटत्वस्येव विधिरूपस्य भेदाभावेन्यस्याभावात् नच तत्रापिकश्चिद्धर्मोस्त्विति वाच्यं अभिन्न इति बुद्धया भेदविरहविषयतया तदसिद्धेः तदन्यस्य तद्विषयज्ञानस्यादर्शनाच्च नच घटइतिबुद्धेरेवतादात्म्यमपि बाधकाभावाद्विषयोस्त्विति बाच्यं घटत्वस्मृतिजन्यघटज्ञाने तस्यप्रकारतयाभानायोगात् औपाधिकधर्मस्य निर्विकल्पकायोगात् घटत्वस्म

दात्म्यसखण्डं वा माद्य आह । औपाधिकेति । उपाधिनिरूपकस्तद्घटितस्वरूपस्य निर्विकल्पकायोगादित्यर्थः निर्विकल्पकाविषयस्यापि सखंडस्य सविकल्पकविषयत्वं घटते विशेषणज्ञानस्य विशिष्टज्ञानाहेतुत्वादिति मन्वानं प्रति तद्विशिष्टज्ञानमेवायुक्तमित्याह घटत्वस्मरणेति । न च घटत्वस्मरणजन्यघटज्ञानस्याप्यस्मिन्मते तादात्म्यप्रकारकत्वसंभवान्नोक्तदोष इति वाच्यं तथासत्यतिप्रसंगात्कल्पका-

भावेन निर्विकल्पकस्याप्यसिद्धिप्रसंगाच्चेति घटत्वस्मरणजन्यं ज्ञानं न तदात्म्यप्रकारकमिति भावः तद्विषयनिर्विकल्पकं तदधीनतत्प्रकारकसविकल्पकान्तरं चाङ्गीकृत्यापि न घटत्वमात्रस्मरणजन्यघटसविकल्पकाधीनभेदानुभवे घटतादात्म्याभावरूपो भेदो न प्रकाशेत् तत्प्रतियोगिभूततादात्म्यस्योक्तघटज्ञानाविषयत्वेन प्रतियोगिज्ञानाभावान्न चैतदेव ज्ञानं तादात्म्यनिर्विकल्पकजन्यमपीति वाच्यं निर्विकल्पकस्मरणयोर्यौगपद्यायोगात्तयोः क्रमिकत्वे च प्रथमोपस्थितस्यैव सामग्रीबलाद्विशिष्टज्ञानं स्यादिति नोक्तप्रकारसंभव इत्याशयेनाह । घटत्वस्मरणेति । तादात्म्यस्याखण्डधर्मत्वपक्षे दोषमाह । अतएवेति । उक्तदोषादेवेत्यर्थः दोषान्तरमाह । शाब्देति । तस्य

रणजन्यघटज्ञानसमानाकारज्ञानस्य तदन्यस्यापि तदधिकविषयत्वायोगात् घटत्वस्मरण जन्यघटज्ञानाधीनभेदज्ञानस्य तदभावविषयत्वप्रसंगाच्च अतएव तादात्म्यमप्यखंडः कश्चिद्धर्मो घटादिर्निर्विकल्पकविषय इति घटप्रत्यक्षे तदपि प्रकारतया प्रतीयत इति प्रत्यु

तादात्म्यस्य घटादिपदस्य घटत्वादिजात्यालिंगितव्यक्तिमात्रबोधकत्वेन नायं घट इत्यादिशब्दात् घटादिघटतादात्म्याप्रतीतेस्तदभावात्मकभेदागमो न स्यादित्यर्थः किंच स्तंभकुम्भाद्भिन्न इत्यादिरूपेण प्रतीयमानभेदप्रतियोगितादात्म्यं सर्वकुंभे प्येकमनेकं वा आद्ये घटादावप्येवमेव तत्तत्तादात्म्यस्यैक्यप्रसंगेन तेनैव तत्तत्तादात्म्ये न तत्तदनुगतव्यवहारोपपत्तौ प्रमाणाभावात्तदतिरिक्तजात्यभ्युपगमः परेषां मुधा स्यादित्याह । जात्यतिरिक्तेति । द्वितीये प्रतिकार्यभिन्नस्य तस्य कार्यात्प्राक्सत्त्वे मानाभावात्तज्जन्यता वाच्या तथा च गुणा-

दिषु जन्यधर्मान।अन्येषु तादात्म्यायोगेन तद्भेदो न स्यात्तादात्म्यकार्यानवस्था च दुर्वारास्यादित्यभिप्रेत्याह । अनित्यस्येति । प्रस्तावा-
भिप्रायेणाखण्डस्येत्युक्तं किंच घटतादात्म्यान्योन्याभावः किं घटभेदस्तदत्यंताभावो वा आद्ये तस्य घटेपि सत्त्वात् घटोपि स्वस्माद्भिन्नः
स्यात् द्वितीये तु घटान्यतादात्म्यात्यन्ताभावो घटभेदो न स्यात् तदन्यप्रतियोगिकत्वात् घटत्वाभाववन्नस्याच्च क्वाप्यत्यन्ताभावातिरिक्तो-
न्योन्याभाव इत्याशयेनाह । घटान्यस्येति । समानतयेत्यत्र घटभिन्नत्वं समानताविभागादिवदेकस्यानेकप्रतियोगिकत्वं किं न स्यादि-

क्तंशाब्दघटज्ञानाद्भेदज्ञानाभावप्रसंगात् तस्यघटशब्दादनुपस्थितिः जात्यतिरिक्ताखंडधर्मा
भ्युपगमे तेनैव सर्वव्यवहारोपपत्तौ जात्यभावप्रसंगाच्च अनित्यस्यखंडस्य रूपादावयोगाच्च
घटान्यास्याखंडधर्मस्यघटत्वादिसमानधर्मतया तादात्म्यात्यंताभावस्यघटाप्रतियोगितया
तद्भेदत्वानुपपत्तेश्च नह्यन्याभावे अन्यः प्रतियोगी एतेन घटत्वाद्यत्यंताभावएव भेद इति
निरस्तं तस्यैव स्वाभावानधिकरणतया घटभेदानाधारत्वेन घटत्वाधारत्वप्रसंगाच्च अभा

त्यत आह । नहीति । भिन्नाकारानेकप्रतियोगिकत्वमेकस्याभावस्य न युक्तं तादृशप्रतियोगिभेदेन परैरभावभेदस्वीकारादित्यर्थः घट-
त्वमेवघटतादात्म्यं तदत्यन्ताभाव एव स्तंभादौ घटाद्भेद इति कस्य चित्कल्पनां निराकरोति । एतेनेति । अन्याभावं प्रत्यन्यस्य प्रतियो-
गित्वाद्ययोगेनेत्यर्थः दोषान्तरमाह । तस्यैवेति । घटत्वात्यन्ताभावस्यैव घटभेदत्वे घटत्वे वक्ष्यमाणविधया स्वात्यन्ताभावासंभवेन तस्य

घटाङ्गदायोगादभेदः स्यादेवं घटत्वात्यन्ताभावस्यापि घटाङ्गदो न स्यात्तस्य स्ववृत्तित्वायोगात् इत्यपि द्रष्टव्यं अत्यन्ताभावस्य प्रतियोगिवृत्तित्वे बाधकाभावात् घटत्वस्य स्वाभावानधिकरणत्वमसिद्धमित्याशंक्याह । अभावस्यैवेति । भावाभावयोः परस्परविरहात्मत्वेन विरुद्धत्वादभावस्य स्वाभावाश्रयत्ववद्भावस्यापि स्वाभावाश्रयत्वं विरुद्धत्वादयुक्तमित्यर्थः ननु परस्परविरहात्मनोर्भावाभावयोरेकाधिकरण्यमेव विरुद्धं न त्वाधाराधेयभाव इत्याह । न च विरुद्धयोरिति । अव्याप्यवृत्तिस्य भावसामानाधिकरण्यस्वीकाराद्भावाभावयोस्तद्विरुद्धमिति परैर्न शक्यं वक्तुं न चावच्छेदभेदेन तदविरुद्धमिति वाच्यं लाघवेनैकाधिकरणकत्वस्यैव विरोधप्रयोजकत्वापत्तावव्वच्छेदभेदस्याकिं

वस्यैव भावस्यापि विरुद्धत्वे नस्वाभावानधिकरणत्वात् नच विरुद्धयोरेकाधिकरण्यमेववि रुद्धं नत्वाधाराधेयत्वमिति वाच्यं अभावे तदभावस्याविक्लृप्तत्वात् किंचाभावाधिकरण त्वयोग्यभूतलस्य घटाधारतादशायां तदभावानाधारत्वं तदधिकरणत्वयोग्यघटाधारत्वप्र

चित्करत्वादणुसंयोगादावव्वच्छेदभेदस्यापि दुर्निरूपत्वाच्च तस्माद्भावाभावयोः परस्परात्मायोग्यत्वं वा परस्पराश्रयत्वायोग्यत्वं वा विरोधोऽभ्युपेयः किं चाभावस्य भावेन लाघवादभावप्रयुक्तस्यैव तदाश्रयत्वायोग्यत्वरूपविरोधस्य परमते क्लृप्तत्वाद्भावस्यापि तदभावात्मनो भावाश्रयत्वायोग्यत्वमेव तेन विरोधोऽभ्युपेयः ततश्च नाभावाश्रयोभाव इत्यभिप्रेत्याह । अभाव इति । अपिरवधारणे सामानाधिकरण्यव्याप्त्यर्थः सिद्धान्तमते समुच्चयो वा इतोऽपि भावस्याभावाश्रयत्वयोग्यता नेत्याह । किं चेति । घटसंसर्गात्प्राग्भूतले विद्यमानस्य तदभावस्य ४६

तत्संसर्गदशायामपि नाशगमनयोरयोगात्तस्य स्वरूपेण सत्त्वेपि तदा तदनाधारत्वघटसंसर्गौपाधिकमेवेति घटस्वभावानाधारत्वं स्वाभाविकमभ्युपेयं इतरथा तस्य तदुपाधिकत्वानुपपत्तेरौपाधिकस्यापि कर्णवलयावच्छिन्न नभो वत्स्वयवदर्थक्रियासमर्थत्वात् घटवति तदभावप्रतीतेश्च भ्रमत्वस्याप्युपपत्तिरिति भावः अभावस्य प्रतियोग्यवृत्तित्वे घटे घटो नेति प्रतीत्यनुपपत्तिरित्याशंक्य स्वस्य स्ववृत्तित्वयोगात् यथा घटाभावे घटो नेति प्रतीतेराधाराधेयभावांशे भ्रमत्वमेव मुक्तबाधकेन घटे स्वाभावाधारत्वायोगादनुभूयमानतद्रूपादिकृति घटाभावाधारत्वस्य तत्तादात्म्यापन्नघटांशसंसर्गमात्रप्रतीतेर्भ्रमत्वमित्यभिप्रेत्याह । नचैवं घट इति । तत्प्रमात्वंगौकृत्याप्याह । घटबुद्धीति । अत्र

युक्तमेव नचैवंघटेघटोनास्तीति प्रतीतिर्नस्यादितिवाच्यं अभावइव तद्बुद्धेराधारत्वांशप्रमाणत्वात् घटबुद्धिविषयघटत्वाधिकरणेतदभावविषयतयाअभावांतरविषयतयावा प्रतीत्युपपत्तेश्च भूतलेघटोनास्तीतिबुद्धिस्तु बाधकाभावात्घटाभावविषया नचैवं तत्रघटसत्यप्रसंगः घटा

द्धि घट इति धीगोचरं तदभावो भासते तथा च यथा शुक्ले पटो नास्तीति शौक्ल्य एव शुक्लतन्तुवृत्तिपटाभावः प्रतीयते एवं घटधीगोचरे घटत्वे घटाभावविषयतया घटे घटो नेति बुद्धेः प्रमात्वोपपत्तिः घटान्तराभावविषय इत्यर्थः तर्हि भूतले घटो नेत्यादि बुद्धेरपि भूतलत्वादौ घटाभावविषयत्वोपपत्तेर्भूतलादौ घटाभावो न स्यादित्याशंक्याह । भूतलइति । घटस्य घटाभावानधिकरणत्वे घटाधिकरणत्वं स्यादभावानधिकरणस्य प्रतियोग्यधिकरणत्वनियमादित्याशंक्य घटाभाव एव व्यभिचारान्मैवमित्याह । न चैवमित्यादिना न च घटा-

भावेपि घटाभावोस्तीति वाच्यं घटाभावान्तराभावात् आधाराधेयभावस्य भेदापेचत्वेन स्वस्य स्ववृत्तित्वायोगाच्च प्रमेयत्वादावपि स्ववृत्तित्वासंप्रतिपत्तेरिति भावः ननु नित्यत्वानित्यत्वादौ भावाभावयोरन्यतरनिषेधे अन्यतरविधेर्नान्तरीयकत्वनियमदर्शनात् घटादेः कथमुभयानाश्रितत्वमित्याशंक्य नित्यत्व एव स्वस्वभावयोरप्यभावादुभयोरन्यतराधिकरणत्वयोग्य एवायं नियम इत्याह। उभयोरिति। अभावस्य प्रतियोग्यवृत्तित्वं सुरेश्वराचार्यैरप्युक्तं घटाभावो विरोधित्वान्न घटोर्थान्तरोपि न अषष्ठार्थतया तस्माद्विकल्पोयं न वस्तुग इति एवं घटत्वात्यन्ताभावस्य घटभेदरूपत्वे घटत्वे तदसंभवेन तस्य घटाङ्गेदो तस्यादित्युक्तं संप्रतिघटभेदघटत्वात्यन्ताभावयोरेकत्वे विषय-

**भावानधिकरणाभावइव तत्रापि तदभावाभावेपितदनधिकरणत्वोपपत्तेरुभयाधिकरणत्वयोग्य एवान्यतराभावेऽन्यतरविधिनियमात् अपिचघटत्वमिहनास्ति नायंघट इतिप्रतीत्योरवैषम्यप्रसंगाः किंच घटत्वात्यंताभावः पटाधिकरणेपि न पटधर्मिकघटतादात्म्याविरोधीति क**

भेदाभावात्तज्ज्ञानयोराकारभेदो न स्यादित्याह। अपिचेति। किं च घटत्वात्यन्ताभावः पटे वर्तमानोपि किं पटधर्मिकघटाभेदविरोधित्वात्तङ्गेद इत्युच्यते उत घटधर्मिकतदभेदविरोधित्वात् नाद्यः पटे घटाभेदे सत्यपि वक्ष्यमाणविधया घटत्वाभावसंभवेन धर्मिकघटाभेदविरोधित्वेपिपटधर्मिकघटाभेदविरोधित्वाभावान्न तस्य तङ्गेदत्वमित्यभिप्रेत्य पटस्य घटभेदस्वरूपमाह। तदुभयेति। परमते घटपटनिरूपिताभेदस्य क्वाप्यभावात्कथं तद्विरोधित्वाभेदइत्यत आह। तदभेदश्चेति। तदुभयनिरूपिताभेदसंभवानाविरोधी तङ्गेद इत्य-

र्थः एवं फलितमाह । यत इति । मूलावच्छेदेन वृक्षेऽग्रत्वात्यन्ताभावसत्त्वे न तदाग्रत्वावच्छिन्नधर्मिप्रतियोगिकाभेदाभावेपि तस्य वृक्ष-
मात्रप्रतियोगिकाभेदाविरोधित्ववत् घटत्वात्यन्ताभावस्य पटे घटत्वावच्छिन्नधर्मिप्रतियोगिकाभेदविरोधिनोपि तदधिकरणद्रव्यमात्राभेद-
विरोधित्वायोगात्स न तद्भेद इत्यर्थः ननु मूलत्वाग्रत्वयोः प्रत्यभिज्ञया वृक्षैकत्वावगमान्मूलेऽग्रत्वानुगमो न तदभेदविरोधी घटत्वपटत्वा-
धिकरणाभेदे तु न किंचिन्मानमिति कथं घटत्वाभावाधिकरणपटे तदधिकरणाभेद इत्याशंक्योक्तविधया तद्भेदस्य दुर्निरूपत्वादेकमेवा-

र्थंतस्यतद्भेदःस्यात्तदुभयनिरूपिताभेदाविरोधिनएव तद्भेदत्वात् तदभेदश्चतर्कितः परमतेअ
तो वृक्षस्याग्रत्वाभावइवतद धिकरणभेदेपि घटत्वाभावोप्युपपन्नइति न सभेदस्तर्किताभेदवि
रोधी तादृशभेदाभावश्च त्योरेव घटत्वाधिकरणाभेदे प्रमाणत्वात् तस्मान्न कथमपि भेदःसि
ध्यति ननु घटत्त्वविशिष्टप्रतियोगिक एवान्योन्याभावः नचैवं विरोधात्तस्य नप्रतियोगिसा

द्वितीयं नेह नानास्ति किंचन नात्र काचनभिदास्तीत्यादिश्रुतेश्च वास्तवभेदाभावरूपाभेदावगमात्सर्वाधिष्ठानैक्यं संभाव्यत इत्याह ।
तादृशेति । एवं प्रतियोग्यनिरूपणान्न वास्तवभेदसिद्धिरित्युपसंहरति । तस्मादिति । अत्यन्ताभावप्रतियोगिन एवान्योन्याभावप्रतियोगि-
त्वमिति पक्षं निरस्तमप्युक्तदोषपरिहारेणोज्जीवयन्पुनरुत्थापयति । नन्वित्यादिना नह्यत्यन्ताभाववदेव प्रतियोगिना सहैकदेकत्र भेदस्य
स्थितिर्न स्यादित्युक्तं परिहरति । प्रतियोग्यविरोधादिति । घटाद्यधिकरणेपि भूतले भूतलं घटो नेति घटान्योन्याभावानुभवात्प्रमाण-

सिद्धेर्विरोधाभावादिति भावः अभावभेदस्य प्रतियोगितदवच्छेदकान्यतरभेदानियतत्वेन तदभावे कथमन्योन्याभावस्यात्यन्ताभावाद्भेद-
स्तदभावे वा कथमुक्ता विरोध इत्याशंक्य प्रागभावप्रध्वंसाभावात्यंताभावानामेकप्रतियोगिकानामपि परस्परभेददर्शनान्नोक्तनियमइ-
त्याह । न च प्रतियोगीत्यादिना प्रागभावादावपि प्रतियोगितावच्छेदकस्य कालविशेषादेर्भेदोस्त्येव प्रकृते सोपि नास्तीति कथं भेद
इत्याशंक्याभावभेदाभावे कदाचिदिदमिदं न कदाचिदिदमिहनेति विलक्षणप्रतीतिद्वयायोगात्प्रतियोग्यादिभेदाभावेप्यभावभेदोभ्युपेयो

मानाधिकरण्यमितिवाच्यं अन्योन्याभावस्य प्रतियोग्यविरोधात् नच प्रतियोग्यतदव
च्छेदकभेदाभावेनतस्यात्यंताभावाभेद इति वाच्यं प्रागभावादिवत्तदुपपत्तेः अन्यथा भूत
लं घटो न भूतलेघटो नेति प्रतीत्योर्वैलक्षण्यायोगादिति चेन्न भूतलंघटो नेति प्रतीत्या हि
भूतलस्य तदभेदविरोधी नञर्थोविषयीक्रियते सचाभेदोयदि घटत्वविशिष्टो घट एव तर्हि तद्वि
रुद्धएव स वक्तव्य इति कथं तस्य प्रतियोगिसामानाधिकरण्यं अविरोधे वा विरोधप्रतीतिर्बाधि

निष्कम्पिरपीत्याह । अन्यथेति । भेदस्यप्रतियोग्यविरोधित्वं तावदुक्तं इति दोषयति । नेति । अन्योन्याभावरूपोभेदः किमभेदविरोधी-
उत न उभयथापिभूतलं घटो नेति प्रतीतौ किं विरोधो भासते नवा तत्र विरोधं तज्ज्ञानं च निराकरोति । भूतलंघटइति । तत्र किं भेदविरोध्य-
भेदः प्रतियोग्यभूतो घट एव तदतिरिक्तो वा तत्राद्येभेदप्रतियोगिनो विरोधात्सामानाधिकरण्यं न स्यादित्याह । स चाभेद इत्या-

दिना भेदस्याविरोधित्वपक्षे विरोधाभानाभ्युपगमे दोषमाह । अविरोध इति । तथा च भेदप्रतीतेरप्रमाणत्वात्तन्निर्वाहाय विषयभेदो न कल्प्य इति भावः विरोधो न भासत इति पक्षमनुवदति । विरोध इति । विरोधप्रतीत्यभावे भेदस्याभेदविरोधित्वासिद्धेः श्रुत्यादिप्रतिपन्नाद्वैते बाधकाभावादस्मदिष्टसिद्धिरित्याह । भेदोऽस्माभिरिति । अविरोधिन इतिच्छेदः भेदविरोध्यभेदः प्रतियोग्यतिरिक्त इति पक्षमनुवदति । यत्तु सत्यमिति । अभेदवत् घटस्यापि भेदप्रतियोगित्वात्तद्विरहात्मत्वं ततश्च सोपि तद्विरोधीति कथं तयोः सामानाधिक-

ता स्यात् विरोधोनप्रतीयते चेत्तर्हि स भेदोऽस्माभिरनिवार्यः अभेदप्रमाविरोधिनोऽप्रतिक्षिप्तत्वात् यत्तु सत्यं भेदाभेदयोर्विरोधः परस्परविरहरूपत्वात् घटस्तु प्रतियोग्यपि न तद्विरहः प्रतियोगित्वं च स्वरूपसंबंधविशेष इति तन्न घटस्वरूपातिरिक्तस्याभेदस्य तद्विरहरूपस्याभावात् घटस्य स्वाधिकरणभेदेपि प्रतियोगित्वप्रसंगाच्च यदपि न भावाभावयोः स्व

११

रण्यमित्याशंक्याह । घटस्त्विति । अभेदस्यैव भेदविरहात्मनाप्रतीतेः तदन्यघटो न तद्विरहात्मना न तद्विरोधीत्यर्थः ननु घटस्य भेदप्रतियोगित्वं तद्विरहात्मत्वमेवातः कथं तत्र तदभावद्रूत्याशंक्य न तत्प्रतियोगित्वं तद्विरहात्मत्वमधर्मादिप्रतियोगिधर्मादौ तददर्शनात्किन्तु तन्निरूपकस्वरूपविशेषः ततश्च भेदप्रतियोगिनोपि घटस्य न तद्विरहात्मत्वमित्याह।प्रतियोगित्वं चेति । निराकरोति । तच्चेति । घटातिरिक्ततदभेदस्य भावरूपस्याभावस्य च प्रागेव निरस्तत्वात्तस्य भेदविरहात्मत्वं दूरापेतमेव भेदस्याभावत्वेन तत्प्रतियोगिनस्तद्विर

ष्टात्मत्वं च दुर्वारमत्यन्ताभावादिप्रतियोगिषु तन्नियमदर्शनादिति भावः किंच घटस्वरूपविशेषस्यैव भेदप्रतियोगित्वरूपत्वेन तत्स्वरूपस्य घटादिप्रतियोगिकस्वनिष्ठभेदं प्रत्यप्यविशेषात् घटस्य तत्प्रतियोगित्वमपि स्यात्तथा च घटः स्वस्मादपि भिन्नः स्यादित्याह । घटस्येति ।
भे० एवं तावदन्योन्याभावस्य भेदत्वे तस्य प्रतियोगिना सह विरोधापत्त्या तत्सामानाधिकरण्यं न स्यादित्युक्तं संप्रत्यविरोधमङ्गीकृत्य सा-
धि० मानाधिकरण्योपपत्तिं शंकते । यद्पीत्यादिना अत्यन्ताभावेनापि प्रतियोगिनो न स्वरूपेण विरोधः सर्वत्र तदभावप्रसङ्गात् किन्तु भा-
४९ वाधिकरणे समारोपितसंयोगादिसंबन्धवत्त्वेनैव तस्यतेन सहविरोध इति तत्संबन्धस्य साक्षात्तेन विरोधस्तत्पुरस्कारेण प्रतियोगिनः स

## रूपेण विरोधोऽपित्वारोप्यसंबंधपुरस्कारेण अन्योन्याभावे चाभेदसंबंध एवाप्यारोप इति तदपि न प्रतियोगिस्वरूपातिरिक्ताभेदस्याभावात् तस्य चासंसर्गत्वात् नचघटत्वमभेदस्तद्भि

इत्यवक्तव्यमेवान्योन्याभावेनापि तत्प्रतियोगिनः समारोपिततदधिकरणाभेदसंबन्ध एव साक्षाद्विरुध्यते प्रतियोगि तु तत्पुरस्कारेण तद्भिन्नं त्वाकारेणैव विरुध्यत इति संबन्धान्तरेण भेदतत्प्रतियोगिनोः सामानाधिकरण्योपपत्तिरित्यर्थः निराकरोति । तदपीति । कोऽयं प्रतियोग्यभेदसंबन्धो योन्योन्याभावाधिकरणे समारोप्यःसंस्तेन विरुध्यते स किं घटादिस्वरूपमेव तदतिरिक्तो वाकश्चिद्धर्मः घटत्वा- ४८
दिरेव वा न मध्यमः तस्य निरस्तत्वादित्यभिप्रेत्याह । प्रतियोगीति । आद्ये प्रतियोगिस्वरूपस्य तत्संबन्धत्वाभावादारोप्य संबन्धपुरस्कारेण विरोध इत्येतदयुक्तं स्यादित्याह । तस्य चेति । तृतीयं निराकरोति । न च घटत्वमिति । घटभिन्नस्य घटत्वस्य पटादिवत्तद्भेदत्वानुपपत्तेरित्यर्थः घटत्वस्यापि घटसंबन्धरूपत्वाभावात्प्रथमकल्पोक्तदोषोऽपि तुल्य इत्यभिप्रेत्याह । तस्येति । ननु भूतलं घट इति

भूतले घटत्वमारोप्य नेति तत्त्वेन घटनिषेधात्तस्य संसर्गरूपत्वमित्याशंक्य सोयमितिवत् भूतलघटइति सामानाधिकरण्यभ्रमत्वेनाभेद-
स्यैवारोप्यमाणत्वात्तत्र तत्तादिवत् घटत्वस्यापि विशेषणतयैव भानान्न तत्संसर्गत्वमित्याह। भूतलमिति । अपि च मृत्घट इत्यादिस-
मानाधिकरणप्रत्ययानां परैः समवायरूपसंसर्गविषयत्वोपगमाद्भूतलं घट इत्यपि भूतले समवायितया घटमारोप्येतेति तदत्यन्ताभाव-
विषयतया निषेधप्रतीत्युपपत्तेर्न तद्विलक्षणान्योन्याभाव आक्षेपतोपि सिध्येदित्याह । किंचैव मिति । अत्र कश्चित् अभावान्तरस्यैव प्र-

न्नस्य तदात्मत्वानुपपत्तेः तस्यसंसर्गत्त्वेप्रमाणाभावाच्च भूतलंघटइत्यारोपेसत्यपितस्य
तत्प्रकारतायाः संसर्गत्वात् किंचैवंभूतलंघटोनेतिधियः समवायसंबंधेनाभावोविषयोस्त्विति
कान्योन्याभावः नचान्योन्याभावस्यप्रतियोगितावच्छेदकेनैवसमंविरोधइतिवाच्यंअभावम
र्यादातिलंघनेतस्यनञर्थत्वायोगात् नचविलक्षणप्रतीतिसिद्धस्य तस्यप्रसिद्धाभाववैलक्षण्यं न

तियोगिसादृश्यं विरुद्धमन्योन्याभावस्य तु तत्प्रतियोगितावच्छेदकेनैव सह विरोधो न प्रतियोगिनेति जल्पति तन्निराकरोति न चा-
न्योन्याभावस्येति हेतुमाह । अभावेति। अनेकाभावेषु नञ् पदप्रवृत्तिनिमित्ततयानुगतप्रतियोगिविरोधि[illegible]ात्मकत्वस्यावश्यमाश्रयणी-
यत्वादितरथान्योन्याभावस्य नञर्थत्वं न स्यादिति भावः । ननु भूतलं घटो नेति प्रतीतेर्भूतले घटो नेति प्रतीत्यपेक्षया विलक्षणत्वेना-
नुभवात्तद्विषयान्योन्याभावस्येतरविषयाभाववैलक्षण्यमवश्यमभ्युपेयं तच्च प्रतियोगितावच्छेदकविरोधित्वमेवेति न तस्य प्रतियोगिसा-

देशानुपपत्तिर्नापि नञर्थत्वानुपपत्तिरभावत्वस्यैव तत्प्रवृत्तिनिमित्तत्वादिति नेत्याह । न च विलक्षणेति । न तावत्प्रतियोगिविरोध-
मात्रस्वभावत्वं विना जातिरूपमुपाधिरूपं वा भावत्वं शक्यं नापि वक्तुं शक्यं यन्नञ्पदप्रवृत्तिनिमित्तं कल्पेनेत्यभिप्रेत्योक्तप्रतीत्योरपि
भे० नञर्थरूपाभावांशेन वैलक्षण्यं किन्तु नञर्थे नाभावांशेन सह प्रतियोगितावच्छेदकतया भूतलं घटः भूतले घट इति प्रतिभाससमानता-
धि० तात्म्यतदितरसंसर्गांश एव वैषम्यमनुभूयत इति न तद्बलात्त्वदुक्तवैलक्षण्यसिद्धिरित्याह । भूतलं घट इति । एवं प्रतियोग्यतावच्छेद-
५० दोषायेति वाच्यं भूतलंघटोन भूतलेघटोनेतिप्रतीत्योर्नञर्थेभूतलघटसंसर्गवैरूप्येणविना नञ
र्थांशेकियतोपिवैलक्षण्यस्याभावात् तदपि तव नस्यात् उभयत्र भूतलस्य घटाभाववत्त्वप्र
तीत्यभ्युपगमात् नचान्योन्याभाववत्त्वं प्रतीयत इतिवैलक्षण्यमितिवाच्यं इदमिदंनेति प्र
तीतावभावेन्योन्याभावत्ववैशिष्ट्यस्याप्रतीतेः तस्य नञर्थत्वाभावात् इदमिदंनेतिप्रतीतिवि
कसंसर्गावैलक्षण्यादभावप्रतीतिवैलक्षण्यसंभवमुक्त्वोभयत्रापि घटत्वं प्रतियोगितावच्छेदकतया भासते इति तव मते तदपि न स्यादि- ५०
ति वृद्धिं गच्छतो मूलस्यैवोन्मूलनन्यायापात इत्याह । तदपीति । ननूभयत्रापि प्रतियोगितावच्छेदकवैलक्षण्याभावेपि भूतलं घटोनेत्यत्र
भूतलगताभावेन्योन्याभावत्वं प्रतीयते इतरत्र त्वत्यन्ताभावत्वमिति प्रतीतिवैषम्योपपत्तिरित्याशंक्योभयत्रापि नञर्थस्यैकप्रकारेण प्रती-
तेरन्योन्याभावत्वस्य परमतेपि नञर्थत्वानभ्युपगमाच्च मैवमित्याह । न चान्योन्याभावत्वमित्यादिना इदमिदं नेति प्रतिपन्नभेदस्यैवेतो

भिन्नावित्यादिरूपेण परं प्रत्युपदिश्यमानत्वादपि न पराभिमतप्रतियोग्यनाश्रितान्योन्याभावस्तद्विषय इत्याह । इदमिदं नेति । नन्वेतौ
भिन्नावित्यादेरपि परस्परप्रतियोगिकान्योन्याभावद्वयमेवार्थः किं न स्यादित्याशंक्य न संयोगवियोगादिवत्तदुभयधर्मिप्रतियोगिकैकभेद-
स्यैव तथानुभवादन्यथाविभागादावपि प्रतियोगिभेदाद्भेदापात इत्यभिप्रेत्याह । न चात्रापीत्यादिना । अभेदो नास्तीति प्रतीतिरप्यवि-
भागो नेति प्रतीतिवदेकविषयैवेत्याह । एवमिति । एवमिदमिदं नेत्यनुभूयमानाभावस्य घटादिप्रतियोग्यकत्वमङ्गीकृत्य पराभिमतभे-

षयस्यैतौ भिन्नावेतयोरभेदो नास्तीतिविवेचना नचात्राप्यन्योन्याभाववत्त्वं प्रतीयतइतिवाच्यम्
विभक्तावितिप्रतीतिवद्भिन्नाविति प्रतीतेरुभयाश्रितैकभेदविषयत्वे नत्वदभिमतभेदाविषयत्वात् एव
मेतयोरभेदो नास्तीति प्रतीतेरपि किंचभेदप्रतीत्या विदारणरूपोभेदाभावो विषयीक्रियते नत्वदभि
मतघटाभावः अतो नेदमिदमिति प्रतीतेस्तवमतेवैलक्षण्यं नसिध्यति यत्त्वन्योन्याभावत्वमखंडोभा

दो न तद्विषय इत्युक्तं इदानीं वस्तुत्वं वदन् घटादिप्रतियोगिकत्वं तस्यायुक्तमित्याह । किंचेति । यथादेवदत्ताभेदभ्रमनिवर्त्तयेनायं दे-
वदत्त इति तदभावोबोध्यते एवं भूतलं घटो नेत्यादावपि सामानाधिकरण्यावगताभेदस्यैव नञर्थाभावप्रतियोगितया प्रतीतेर्न घटादे-
स्तत्प्रतियोगितेत्यर्थः एवं चेदं न इदमिदं नेति प्रतीत्योरस्मदुक्तरीत्याभिन्नप्रतियोगिकाभावविषयत्वे वैलक्षण्योपपत्तिर्न त्वदुक्तरीत्यैक-
प्रतियोगिकाभावविषयत्व इत्युपसंहरति । अत इति । इदमिदं नेत्यनुगतप्रत्ययनिर्वाहाय तद्विषयान्योन्याभावेषुतत्त्वं नामाखंडधर्मो

गोत्वादिवदभ्युपेयते तद्विषयत्वमेवास्येदमिदंनेति प्रत्ययाद्दै लक्षण्यमिति कस्यचित्कल्पनामनूद्यनिराकरोति । यत्त्वित्यादिना किमन्यो-न्याभावत्वं जातिरुपाधिर्वा नाद्यः अपसिद्धान्तापातात्तस्य स्वाश्रयाभावेन समवायतादात्म्यासंभवेन जातित्वायोगाच्च द्वितीये तस्याखं-डधर्मत्वानुपपत्तिरितरथा गवादिष्वपि सास्नादिमत्त्वाद्युपाधीनामेवाखंडधर्मत्वकल्पनयानुगताव्यवहाराद्युपपत्ते रतिरिक्तजातिकल्पना-नर्थिकास्यादिति पूर्वबाधकस्योक्तत्वादित्यभिप्रेत्याह । अखण्डे ति । किंचान्योन्याभावत्ववदेवेदमनेन सदृशमिदं विसदृश्यमित्यनुगतधी-विषयसादृश्यादिकमप्यखण्डधर्मः स्यात्तस्य तु सर्वत्रानुभूयमानस्य क्लृप्तद्रव्यादिपदार्थेष्वनन्तर्भावात्पदार्थान्तरता स्यात्सा च तवानिष्टे-

वद्वृत्तिः कश्चिद्धर्मस्तत्प्रतीतिविषयइतितन्न अखंडोपाध्यंगीकारबाधकस्योक्तत्वात् सादृश्या देरप्यखंडधर्मस्यप्रतीत्यनुसारेणपदार्थांतरस्य प्रसंगाच्च क्लृप्तान्तर्भावे च पदार्थांतरकल्पना नुपपत्तिःप्रकृतेपि समानानेत्येकाकारप्रतीतेरभावत्वान्योन्याभावत्वधर्मद्वयवैशिष्ट्यविषयत्वेन तस्याभावविशेषत्वे प्रमाणाभावाच्च नहि तदभावत्वसाधकमिदं नेति प्रतीतिव्यतिरिक्तकिंचि 

त्याह । सादृश्यादेरिति । ननु न सादृश्यादिपदार्थान्तरं गुणावयवकर्मसामान्यभूयस्त्वादेरेव सदृशादिधीगोचरतया सादृश्यादेरपि त-त्मात्रत्वादित्याशंक्येदं इदं नेति धीगोचरस्याप्यभेदाभावत्वमात्रतोपपत्तेर्न तदतिरिक्तखंडधर्मसिद्धिरित्याह । क्लृप्तान्तर्भाव इति । किंच भूतलं घटो नेत्यनुभूयमानाभावे योन्योन्याभावत्वरूपो विशेषः स किं नेत्याकारप्रतीत्यैव सिद्ध्यति प्रतीत्यन्तरेण वा नाद्यः नेत्या-

कारप्रतीतेरन्यत्राभावत्वमात्रगोचरत्वोपगमाद्य तदतिरिक्तगोचरत्वायोगादित्याह । नेत्याकारेति । द्वितीयं निराकरोति । नहीति । अस्य अस्मान्निद इति प्रतीतिरेव भेदगतान्योन्याभावत्वरूपाखंडधर्मविषया तत्साधकेत्याशंक्येदमिदं नेति प्रतीयमानाभावसाधकान्योन्याभावपदपर्यायभेदपदार्थप्रतीतेरपि तन्मात्र विषयत्वेन त्वयोपेतत्वात्ततोपि न तदखण्डधर्मसिद्धिरित्याह । भेदेति । एवमन्योन्याभावत्वमखण्डधर्म इति मतं निरस्य सखण्डोपाधिविशेषरूपं तदिदमिदं नेति प्रतीयत इति मतं निराकरोति । न च प्रतियोगीति । घटप्रतियोगिकभूतलनिष्ठभेदे प्रतियोग्यधिकरणवृत्तित्वरूपविशेषानुभवेपि भूतलप्रतियोगिकघटनिष्ठभेदे तदनुभवात् घटो भूतलं नेत्यादि-

दस्ति भेदान्योन्याभावशब्दयोः पर्यायत्वेन भेदबुद्धेरप्यखंडविषयतया तदसाधकत्वात् नच प्रतियोग्यधिकरणवृत्त्यभावत्वमन्योन्याभावत्वं तत्प्रतीतिविषयइति वाच्यं घटादिनिष्टभूतलादिभेदबुद्धेस्तदविषयत्वापातात् भूतलमात्मा न भवतीतिबुद्धेस्तदयोगाच्च नह्यात्मनस्तत्वमम

प्रतीते घटे भूतलं नेति प्रतीति वैषम्यं न स्यात् इत्यभिप्रेत्याह । घटादिनिष्ठेति । भूतलप्रतियोगिकघटनिष्ठभेदस्य वस्तुतो भूतलाधिकरणतदवयवादिनिष्ठत्वाद्विशेष इत्याशंक्य तस्य घटो न भूतलमित्यत्राप्रतीयमानत्वेनैतद्वैषम्यप्रतीत्यनुपयोगि[illegible]मित्यभिप्रेत्यदूषणान्तरमाह । भूतलमात्मेति । आत्मादेर्निरधिकरणत्वेन तदभावस्य वस्तुतोपि प्रतियोग्यधिकरणवृत्तित्वायोगेन भूतलादौ तादृशा[illegible]वाभावाद्भूतलमात्मनेत्यादिबुद्धेर्भेदगोचरता न स्यादित्यर्थः आत्मादेरपि कालाश्रितत्वप्रतीतेर्निरधिकरणत्वमसिद्धमिति शंकते । इदानीमिति ।

कालस्यात्माद्यधिकरणत्ववत्तदत्यन्ताभावाधिकरणत्वमप्यस्त्येव परैः कालस्य सर्वाधारत्वोपगमात् विभूत्यन्ताभावस्य केवलान्वयिताभ्युपगमाच्च तथा च कालवृत्त्यत्यन्ताभावेपि गतत्वात् प्रत्ययोग्यधिकरणवृत्तिभावत्वमन्योन्याभावत्वमित्येतदयुक्तमित्यभिप्रेत्याह । तर्हीति । प्रतियोगिसमानाधिकरणाभाववृत्तित्वे सत्यभावत्वव्याप्यधर्मोन्योन्याभावत्वमित्यनेनोक्तमप्युक्तं उक्तविधयात्यन्ताभावत्वस्यापि तथात्वात्साक्षादभावत्वव्याप्यत्वविवक्षायां च संसर्गाभावत्वेति व्याप्तेरित्यभिप्रेत्याह । न च प्रतियोगीति । किं चोक्तरूपाभावत्वव्याप्यधर्मो खण्ड उपाधिः सखण्डो वा नाद्यः तदभ्युपगमे जातिविलोपापातस्योक्तत्वादित्याह । तस्येति । द्वितीये भानाभावादेवतदसिद्धिः भेदप्रतीतेः

वाधिकरणमस्ति इदानीमात्मेति बुद्धेः कालोधिकरणमिति चेत्तर्हि तदत्यंताभावोपि तत्रास्त्येव नच प्रतियोग्यसमानाधिकरणभाववृत्त्यभावत्वव्याप्यधर्मोन्योन्याभावत्वमिति वाच्यं

प्रतियोग्यसमानाधिकरणाभाववृत्तित्वाद्यनाकारत्वात्तदाकारप्रतीत्यन्तरादर्शनाच्चेत्यभिप्रेत्याह । इदमिदमिति । प्रतियोग्यसमानाधिकरणाभाववृत्तिधर्मस्याभावत्वव्याप्यत्वं यदुक्तं तदपि मानाभावादयुक्तमित्याह । तस्मिन्निति । इदमिदं नेति नञर्थो लेखिधिया तत्राभावत्वमात्रं प्रतीयते न तु तेन सह व्याप्तिस्तद्दानुकश्चित्प्रतीयत इति न तत्सिद्धिरित्यर्थः इदमिदंनेत्यनुभूयमानस्याभावस्य कदापि प्रतियोगिवृत्तित्वाननुभवात्प्रतियोग्यवृत्त्यभावत्वमेवान्योन्याभावस्य प्रतियोगिवृत्त्यत्यन्ताभावाद्विशेष इति तदनुभववैषम्योपपत्तिरिति शंकते । प्रतियोगीति । इदमिदं नेत्यत्रापि नञर्थं प्रतियोग्यवृत्तित्वविशेषस्य सतोप्यप्रतीतेस्तत्प्रयुक्तं प्रतीतिवैषम्यमयुक्तमिति दूषयति ।

नेति । अत्यन्ताभावस्यापि प्रतियोगिविरुद्धस्वभावतया तद्वृत्तित्वस्योपपादितत्वात्साधारणोयं ततोस्य वस्तुतोपि न विशेष इत्याह । अत्यन्ताभावेपीति । किंच दिक्कालयोः सर्वाधारत्वात्तत्प्रतियोगिकभेदस्य प्रतियोग्यवृत्तित्वायोगेन तत्राव्याप्तिरित्याह । कालादीति । असंभवमप्याह । घटपटयोरिति । धर्मिप्रतियोगित्वेनाभिमतयोर्घटपटयोरेकस्यैव भेदस्यानयोरभेदो नेत्यादिरूपेणानुभवाल्लाघवाच्च वि-भागादिवदुभयत्राप्येकत्वात्तस्य पराभिमतप्रतियोग्यवृत्तित्वमसंभवतीत्यर्थः एवं परमतेन्योन्याभावत्वस्य दुर्निरूप्यत्वात्तद्विषयत्वप्रयुक्तमिदं

तस्यैवाखंडस्य निरस्तत्वात् इदमिदं नेति प्रतीतेरेव माकारकत्वायोगाच्च तस्मिन्नभावत्व
व्याप्तिग्राहकप्रमाणाभावाच्च नञर्थप्रतीतिमात्रस्य तदसाधकत्वात् प्रतियोग्यवृत्त्यभावत्वम
स्य ततोविशेष इति चेन्न अत्यंताभावेपि तस्योक्तत्वात् कालादिभेदे तदभावाच्च घटपटयो
रभेदोनास्तीत्येकस्यैवाभेदाभावलक्षणे भेदस्योभयत्रानुभवाच्च तस्मान्न कथमपि तव प्रती

नेति प्रत्ययस्येदमिह नेति प्रत्ययाद्वैषम्यं परोक्तमयुक्तमित्युपसंहरति । तस्मादिति । ननु प्रतियोग्यधिकरणे प्रतीयमानाभावः कथं तद्व्यधिकरणाभावान्न विलक्षणः कथं वा तत्प्रतीतिस्तत्प्रतीतेर्न विलक्षणेत्याशंक्य घटाधिकरणे तत्प्रतियोगिकाभावस्यासंभवादेव तत्र तत्र तत्प्रमितिरेवानुपपन्ना कुतस्तद्बलाद्विलक्षणाभावादिसिद्धिः प्रतीतिमात्रं तु वक्ष्यमाणविधया घटभूतलाभेदाभावरूपानिर्वचनीयभेदवि-षयतया ऽस्मन्मते घटत इत्यभिप्रेत्याह । एतेनेत्यादिना किंच घटपटाद्यभाववैलक्षण्येन लाघवात्प्रतियोगिवैलक्षण्यस्यैव प्रयोजकत्वम

क्तृत्वादिकप्रतियोगिकत्वेऽन्योन्याभावात्यन्ताभावयोस्तदभावेनवैलक्षण्यासंभवात्तद्बुद्धि वैलक्षण्यंतद्वदुर्लभमित्याह । प्रतियोगीति । किंच संबन्धिनिरूप्यस्वभावानां समानकालीनानासंयोगादीनां भेदः संबन्धिभेदेन नियत इति समानकालीनान्योन्याभावात्यन्ताभावयोरे-कप्रतियोगिकत्वे व्यापकप्रतियोगिकत्वे व्यापकप्रतियोगिभेदाभावाद्व्याप्यभेदो न स्यादित्याह । ससंबन्धिकेति । अभावभेदे प्रतियोगि-भेदः प्रयोजक इत्यस्य पराभिमतप्रागभावध्वंसयोर्व्यभिचारमाशंक्य प्रागुत्तरकालीनानिर्वचनीयसूक्ष्मरूपातिरेकेण प्रागभावादेरनिरूपणे पक्षतुल्यत्वान्न व्यभिचार इत्याह । अत्यन्ताभावेति । एवमिदमिदं नेदमिहनेति प्रतीत्योर्विषयवैलक्षण्याद्वैलक्षण्यमिति मतं निरस्य का-

तिवैलक्षण्यमुपपद्यते एतेन घटाधिकरणेपि भूतले भूतलंघटोनेति प्रतीतिर्विलक्षणोऽभाव इति प्रत्युक्तम् एतस्या एव तन्मते घटाभाववद् भूतलमिति प्रतीतिवत्तत्रानुदयप्रसंगात् प्रतियोग्य वैलक्षण्यंविनाऽ भाववैलक्षण्यायोगात् ससंबंधिकपदार्थस्य संबंधिभेदाभावे तदयोगात् अत्यं

रणावैलक्षण्याद्वैलक्षण्यमिति मतमनूद्यनिराकरोति । यत्त्वित्यादिना । इदमिह नेति ज्ञाने भावाधिकरणे प्रतियोगिसंसर्गारोपः कारण-मिदमिदं नेति ज्ञाने तु तत्र प्रतियोग्यतावच्छेदकारोपः कारणमितिपराभ्युपगमानुरोधेन कारणवैलक्षण्यात् कार्यज्ञानवैलक्षण्यमात्र सिद्धावपि नैतावता तद्विषयाभावभेदसिद्धिः परमते प्रत्यक्षानुमानजनितैकाभावधीवैलक्षण्येपि तद्विषयभेदाभावादित्यर्थः । वैलक्षण्या-योगादिति विषयभेदबाधकवैलक्षण्यायोगादित्यर्थः विलक्षणारोपजन्यत्वेन ज्ञानवैचित्र्यमङ्गीकृत्य नैतावताभावभेदसिद्धिरित्युक्तं संप्रति-

विलक्षणाभावविषयत्वरूपज्ञानवैलक्षण्यग्रहं विना तयोर्व्यवस्थय। विलक्षणारोपजन्यत्वस्यैव दुर्ग्रहत्वात्तत एव विलक्षणाभावविषयत्वसाधने परस्पराश्रयापत्तेर्नैकमपि सिद्ध्येदित्यभिप्रेत्याह। स्वत इति। किं च किमन्वयव्यतिरेकाभ्यामुक्तारोपद्वयस्य ज्ञानद्वयव्यवस्थयाकारणत्वमवसीयते उत ज्ञानद्वयवैलक्षण्यानुपपत्त्या नाद्यः अधिकरणग्रहणप्रतियोग्यस्मरणात्तदनुपलंभादिनैव तदुपपत्तौ तदन्वयादेरसिद्धेरित्याह। अभावधीति। द्वितीयं निराकरोति। प्रमेयेति। भूतलं घटाभाववद्भूतले घटाभाव इति ज्ञानद्वयवद्भूतलं घटो न भूतले घटो नेति तयोरपि नञर्थाभावस्य विशेषणविशेष्यभावव्यत्ययं विना प्रमेयभेदानुपलंभाद्विशेषणप्रमेयकत्वलक्षणवैलक्षण्यस्यासिद्धेः विशेषण-

# ताभावातिरिक्तप्रागभावादिरप्यन्योन्याभावस्तुल्य एवयत्त्वारोपवैचित्र्यात्तज्जन्याभावधीवैचित्र्यमिति तत्र प्रमेयभेदं विना प्रत्यक्षानुमानाभावधीवैलक्षण्यायोगात्स्वतोऽभाववैचित्र्यं विना तस्य तज्जन्यत्वज्ञानासंभवाच्च अभावधीपूर्वं प्रतियोगिज्ञानादिघटिताभावधीसाम

भावादिप्रयुक्तवैलक्षण्यमात्रस्योक्तारोपभेदानपेक्षत्वादितरथाभूतले घटाभाव इत्यादावपि तत्प्रसङ्गादन्यस्य तेन विनानुपपद्यमानस्याभावान्न तत्सिद्धिः एतेन कदाचिदिदमिह न कदाचिदिदमिदं नेति प्रतीत्यो कादाचित्कत्वानुपपत्त्या तत्सिद्धिरिति निरस्तं भूतले घटाभाव इत्यादाविव तेन विनापि तदुपपत्तेः अन्यथाप्रतियोगितावच्छेदकारोपानन्तरं तदत्यन्ताभावतदाश्रयान्योन्याभावप्रतीति यौगपद्यप्रसंगस्य परमते दुष्परिहरत्वाद् बुद्धिपूर्वकारोपस्य तत्र तदभावग्रहपूर्वकत्वादारोपानवस्थापातादबुद्धिपूर्वकतदारोपस्य भेदग्रहहेतुत्वे र-

जतभ्रमानन्तरमेव तन्नै दृग्रहापाताद्दोषस्योभयत्रारोपहेतुत्वादिति भावः एवमभावज्ञानात् प्रागारोपविशेषे मानाभावमुक्त्वा तदभावे मानमाह । दोषाभावेनेति । अभावाधिकरणमात्रस्य तत्प्रतियोग्यादिसादृश्यदूरस्थत्वादेरभावादनौपाधिकारोपस्य कारणाभावादसंभव इत्यर्थः आहार्यारोपे न दोषः कारणं तेन तदभावेपि तत्संभव इत्याशंक्याह । जन्येति । अज्ञानाद्यारोपरूपे साक्षिणि दोषस्याकारणत्वाज्जन्येत्युक्तं लाघवाज्जन्यारोपमात्रे दोषजन्यत्वावधारणात्तदभावे तदनुपपत्तेः तदारोपात्प्राक्तच तदभावानिश्चयेन तस्याहार्यारो-

भं॰ धि॰ ५४

अथां सत्यामारोपसद्भावे प्रमाणाभावाच्च प्रमेयवैलक्षण्यादृतेऽभावधीवैलक्षण्यासंभवेन ततस्तदसिद्धेः दोषाभवेनारोपासंभवाच्च जन्यारोपमात्रे दोषस्य कारणत्वात् अन्यथा तदप्रामाण्यस्य परतस्त्वानुपपत्तेः नचेच्छैवदोषःधर्मिज्ञानसाध्येच्छाया आरोपात्प्रागसंभवात् धर्मिज्ञानस्य च तत्रारोपरूपस्येच्छासाध्यत्वात् अन्यवैशिष्ट्यज्ञानेच्छाया अन्यवैशिष्ट्यज्ञाना

पत्त्वायोगाच्चेति भावः दोषजन्यत्वाभावे बाधकमाह । अन्यथेति अप्रमायाः प्रमाहेतुविजातीय हेतुजन्यत्वमेवह्यप्रामाण्यस्योत्पत्तौपरतस्त्वं तच्चारोपस्य दोषाजन्यत्वेन स्यादित्यर्थः तच्चाभावाधिकरणे प्रतियोगिसंसर्गज्ञानगोचर एव दोषोस्त्वित्याशंक्य तस्यारोपाज्ञानसाध्यत्वान्न तद्धेतुतेत्याह । नचेच्छैवेति । आरोपात्प्रागप्यन्यत्रारोप्यसंसर्गानुभवात्तदिच्छाया अन्यत्रारोप्य संभवमाशंक्य भिन्नविषययोस्तयोः हेतुहेतुमद्भावायोगान्मैवमित्याह। अन्यवैशिष्ट्येति। ननु सामान्येन भूतलमात्रे घटसंसर्गज्ञानात्तदिच्छया पुरोदेशे समारोप इत्याशंक्या- ५३

ह । न च सामान्येनेति । भूतलसामान्ये घटसंसर्गगोचरज्ञानेच्छया पुरोदेशे एव तदारोपे नियामकाभावात् सर्वत्रैव तदारोपः स्याद-न्यथा कुत्रापि न स्यादित्यर्थः अपि च भूतलं घटो नेति ज्ञानात्पूर्वं किं भूतले घटत्वसंसर्ग आरोप्यते उत घटसंसर्गः नाद्यः घटप्रति-योगिकाभावज्ञानस्य प्रतियोग्यतिरिक्तारोपजन्यत्वासंभवेन तद्वैयर्थ्यात् घटत्वमिह नेति प्रतीतिप्रसङ्गाच्च न द्वितीयः भूतले घटसंसर्गस्य सत्त्वेन तदारोपायोगादित्याह । किंचाप्रतियोगिन इति । ननु भूतले घटत्वं न स्यातन्त्रेणारोप्यते किन्तु घटसंसर्गात्मनैव ततो नोक्त-दोष इत्याशंक्य तस्य संसर्गत्वेनानुभवात्प्रतियोगिज्ञानांशे प्रकारत्वेनानुभवाच्च संसर्गरूपेणाप्यारोप इति प्रागुक्तं स्मारयति । अप्रसिद्धेति ।

हेतुत्वात् नच सामान्येन भूतलेघटज्ञानमस्तीतीच्छया आरोप इति वाच्यं उपस्थितदेशांत रं विहायात्रै व तदारोपे तस्या अनिमित्तत्वात् किंच अप्रतियोगिनोघटत्वस्यारोपोनहेतुः घ टवति च घटस्यारोपःअप्रसिद्धिप्रकारत्वाभ्यां घटत्वंच न संसर्ग इत्युक्तं इष्टसाधनत्वज्ञानंवि

धर्मिज्ञानसाध्येच्छाया इत्येतत्सिंहावलोकनन्यायेन प्रपंच इति।इष्टसाधनत्वेति । आरोपोत्पत्तेः प्राक्तस्याप्यनुपस्थितत्वेन तद्गतेष्टसा-धनत्वस्यानुपस्थितेस्तदुपस्थितेस्तदुपस्थित्यधीनेच्छाया एव प्रागसंभवान्न तस्यास्तद्धेतुतेत्यर्थः नन्वाहार्यारोपे तदिच्छाया अहेतुत्वेन दोषा-न्तरस्याप्यभावात् क्वापि न स्यात्ततश्च प्रतीकोपास्तीनामप्यसंभवात्तद्विधीनामप्रामाण्यापात इत्याशंक्याह । न चैवमिति । प्रतीकोपा-स्ति गतेष्टसाधनत्वस्य श्रुत्यैव बोधितत्वात्तदधीनेच्छयारोपोपपत्तेर्न तद्विधीनामप्रामाण्यं यत्र तु प्रत्यक्षातिरिक्तं तदुपस्थापकं नास्ति त-

चारोपोपपत्तेः प्राक्तदिष्टसाधनत्वाग्रहादिच्छाभावेन पर्यारोपाभाव इष्ट इत्याह । मनो ब्रह्मेत्यादीति । नन्वेवं सति प्रतारकस्योत्प्रेक्ष-कस्य वा नतद्वाक्यार्थगोचराहार्यारोपाभावेन तद्वाक्यरचना न स्यादित्याशंक्याह । प्रतारकेति । शुकसुप्ता दिप्रलापवदर्थज्ञानाभावेपि श-ब्दज्ञानादेव तद्वाक्यवचनोपपत्तिरित्यर्थः वस्तुतस्तु प्रतारकादेः स्वेष्टपरकीयप्रवृत्त्यादिहेतुतया तर्कितमसत्संसर्गज्ञानं परस्मिन्नुत्पादयि-तुमिच्छया तदारोपपूर्वकं तद्बोधकवाक्यरचनोपपत्तिरित्यपि नासूचितं एवं भेदस्वरूपतत्प्रतियोगि दुर्निरूपतामुपपाद्यानवस्थापत्त्यापि

ना आरोपच्छाया अयोग्यत्वाच्च नचैवं क्वचिदप्याहार्यारोपो न स्यादिति वाच्यंमनो ब्रह्मेत्या दिशास्त्रान्निमित्तात्तदभावस्येष्टत्वात् प्रतारकवाक्यादेरैच्छिकसंसर्गज्ञानं विना संभवात् कि ञ्चास्याप्रतियोगिनःनस्वात्मकोभेदःस्वावृत्तित्वात् अभेदस्यासम्बन्धत्वात् भेदोभेदोऽभिन्नइति प्रतीत्योरवैलक्षण्यापाताच्च भेदाधियापि तदभेदप्रतीतेःस्वस्यवस्वंप्रति विशेषणविशेष्यत्वायोगाच्च

तस्य दुरवस्थतां वक्तुमुपक्रमते । किं चेति । किमन्योन्याभावात्मको भेदोधर्मिप्रतियोगिभ्यामभिन्नो भिन्नो वा नाद्यः असंभवाद्वस्तुस्वरूप मात्रेभेदवुद्ध्यविरोधी न भेदपरिभाषाया अनिर्वार्यत्वाच्च द्वितीयेऽस्यभेदस्य प्रतियोगिनः सकाशाद्यो भेदः सकिं धर्मिभूतभेदस्वरूपमेव ततो भिन्नो वा नाद्यः स्वस्य स्वेन संबन्धाभावेन धर्मधर्मिभावानुपपत्तेरित्याशयेनाह । अस्य प्रतियोगिन इति । अभेदसंबन्धाद्धर्मधर्मिभा-वसंभवमाशंक्याह । अभेदस्येति । वस्तुस्वरूपमात्रात्मभेदस्य विशिष्टधीसाधारणत्वेन विशिष्टधीनियामकत्वायोगात्संबन्धत्वासंभवः अन्य- ५५

थारूपीघट इति वद्रूपं रूपीत्यपि प्रत्ययापात इति भावः किंचास्मिन्पक्षे भेद इति प्रतीतेर्भेदो भिन्न इति प्रतीतेश्च विषयाभेदाभावादनु-
भूयमानवैलक्षण्यं न स्यादित्याह । भेद इति । भेदो भिन्न इति प्रतीतावभेदसंबन्धो भासते इतरत्र नेति वैषम्यमित्याशंक्याभेद-
स्वरूपभूताभेदस्य भेद इति प्रतीतावपि भासमानस्य कथमपि दुर्निरूपत्वान्मैवमित्याह । भेदधियेति । किंच गुणप्रधानभूतपदार्थभेदनि-
यतत्वात्सर्वत्र विशेषणविशेष्यभावस्य घटभेदो घटभिन्न इति च प्रतीयमानो विशेषणविशेष्यभावो घटभेदद्वयाभावे न स्यादिति
घटभेदो घटभेदान्तरं दुर्वारमित्याह । स्वस्यैवेति । अस्तु तर्हि पटादिवृत्तिघटभेदे तद्भेदान्तरमित्याशंक्य प्रतियोगिभेदाभावाद्भेदद्वय-
मनुपपन्नं न चाधिकरणभेदमात्रेणाभावभेदः परेषां संमत उपपन्नो वेत्यभिप्रेत्याह । भेदान्तरं चेति । प्रतियोगिन एकत्वेप्यनुभवबलाद्भेदे

भेदान्तरंचाधिकरणभेदमात्रादनुपपन्नम् तथात्वेबाधावीनिगमनाभ्यांपटेपि सः स्यादित्य
56 त्रैकस्यभेदद्वयंस्यात् एवं तृतीयोपि अन्यथा द्वितीयस्य घटाद्भेदायोगात् प्रथमस्यच स्व

भेदान्तरमभ्युपेयत इत्याशंक्याह । तथा त्वं वेति । अधिकरणभेदेनाभावभेदाभावेम घटभेदवृत्तितद्भेदस्य पटादिवृत्तित्वेपि बाधकाभावा-
त्पटादौ घटभेदप्रतीतेस्तद्विषयत्ववारकाभावाच्च तत्र द्वितीयोपि भेदः स्यादित्यर्थः ततः किं तत्राह । एवमिति । प्रथमभेदप्रवृत्तिद्वितीय-
भेदप्रवृत्तितृतीयभेदेपि घटादौ स्यादित्यर्थः द्वितीयभेदे भेदान्तरमेवनेत्याशंक्याह । अन्यथेति । भेदायोगादित्यत्राभेदः स्यादिति शेषः ननु
द्वितीयभेदस्य तृतीयभेदाभावेपि घटभिन्न एव प्रथमभेदस्यैव स्वनिष्ठद्वितीयभेदवृत्तित्वेन तस्यापि घट भेदवत्त्वादित्याशंक्य तथा सति भेद-
द्वयस्य परस्पराश्रयता स्यात्सा च विरुद्धत्वादनुपपन्नेत्याह । प्रथमस्येति । नचोत्पत्त्यादिप्रबंधकत्वाभावान्नायं परस्पराश्रयोदोषायेति वा-

च्यम् । अस्यापि परस्पराधीनोत्पत्त्यादिवत्क्वाप्यदर्शनेन विपरीतदर्शनेन चासंभावितत्वेनैव दोषत्वाद्भेदस्य संबन्धित्वेनैव विशेषणत्वेनैव प्रतीति नियमेन तत्प्रतीतौ तद्भेदप्रतीत्यपेक्षया वक्ष्यमाणत्वेन ज्ञप्तिप्रतिबन्धिसंभवाच्चेति भावः प्रमेयत्वाभिधेयत्वादौ परस्पराश्रयदर्शनाद्भ तस्यासंभावितत्वेत्याशंक्य प्रमाविषयत्वाद्यतिरिक्तप्रमेयत्वाद्यनिरूपणात्तस्य च रूपसंबन्धात्मनः परमतेपि नानात्वात् यावत्प्रतीति तदभ्युपगमे ऽनवस्थाभावाच्च न तत्र परस्पराश्रयतेत्यभिप्रेत्याह । प्रमेयत्वादीति । किंच भेदद्वयस्य परस्पराश्रयत्वे द्वयोरपि युगपदन्योन्यं प्रतिविशेषणत्वं विशेष्यत्वं च वक्तव्यमितरथा पटवृत्तिभेदतद्वृत्तिभेदौ घटाद्भिन्नाविति द्वयोरपि विशेषणविशेष्यभावे नैकप्रतीत्ययोगाद्विशेषणत्वादिचैकस्यैकं प्रतियुगपदन्यत्राहष्टत्वादसंभवीत्याह । नहीत्यादिना ननु युगपदेकस्यैकं प्रतिविशेषणत्वं विशेष्यत्वं चान्यत्राहष्टत्वमपि

**वृत्तित्वानुपपत्तेः प्रमेयत्वादिचानैकमित्युक्तम् नहि युगपत्स्वविशेषणंप्रति स्वयंविशेषणंभवति अन्यथा तौ भिन्नाविति प्रतीत्ययोगात् विरुद्धयोरप्यभेदे किमपराद्धं श्रौतेनाऽ यमपबाधा**

प्रकृते प्रतीते बलादेव स्वीकर्तव्यमित्याशंक्य तथा सति जीवब्रह्मणा भेदोपि श्रुतिसिद्धः स्वीकार्यं इति सिद्धान्तः समीहितं विरोधात्तदनभ्युपगमे च भिदोभिन्नावित्यत्र विशेषणभेदोपि विशेष्याभ्यामन्यस्तृतीयोऽभ्युपेय इत्यभिप्रेत्याह । विरुद्धयोरिति । तृतीयभेदस्वीकारे तस्यापि प्रथमादिवत् पटतद्गतप्रथमादिभेदवृत्तितास्यादित्याह । त्रयमपीति । ततोपि किमित्याशंक्य तस्यास्थिरा[illegible]दसिद्ध्यर्थं निरवधिकाभेदोऽभ्युपेय इत्यनवस्थापातः स चाप्रामाणिकत्वान्न स्वीकर्तव्यः इतरथा सत्त्वादावपि सत्त्वादिदर्शनात्सत्त्वाद्यनवस्थादुष्परिहारास्यादित्यभिप्रेत्याह । तत इति । एवं घटप्रतियोगिकानन्तभेदापत्तिमुक्त्वा भेदेष्वप्यन्योन्यप्रतियोगिकानन्तभेदापत्तिमाह । एवं इति । घटा- 

द्धिधर्मिप्रतियोगिनोरप्यैकैकभेदप्रतियोगिकानन्तभेदापत्तिश्च स्यात् ।तथेति। नन्वेतस्यानवस्थादिपरिहाराय घटादिवृत्तिघटभेदस्य स्व-
रूपमेव घटादिभ्यो भेदः स एव भेदो भिन्न इत्यादिबुद्धेर्विषयः एवं भेदाश्रयोपि घटादिरेवेत्याशंक्य तर्हि तद्वदेव घटादिस्वरूपस्यैव भि
न्न इत्यादिधीविषयत्वसंभवाल्लाघवात्तत्स्वरूपमेव घटादिभेद इति प्रथमस्याप्यन्योन्याभावस्य विलोपापात इत्याशयेनाह । स्वरूपस्येति ।
भेदस्वरूपस्यैव भेदो घटो नेत्यादिभेदबुद्धिविषयत्वे घटादावपि स्वरूपालंबनेनैव भेदधीरुपपद्यत इति तत्र कल्पितान्योन्याभावेन किमिति-
त्यन्वयः नन्वन्योन्याभावस्वरूपस्यैव भेदधीगोचरत्वसिद्धयुत्तरकालीनत्वादस्याः कल्पनायाः कथं घटपटयोः तदपलाप इत्याशंक्याह । त-

विनिगमाभ्यां प्रथमे ततश्च तुर्यादिरपि सकलवृत्तिस्यादित्यैकैकस्यानन्ताभेदानामप्यन्यो
न्यप्रतियोगिकानंतभेदापत्तिः प्रामाणिकभेदः एवं तेषामप्यन्योन्यं तथाभेदाद्धर्मिप्रतियो
57 गिनोरपिस्वरूपस्यच भेदबुद्धिविषयत्वेतत्प्रतीतिसमकालमुत्पन्नाभावप्रतियोगिनिच क्लृ

त्प्रतीतिसमकालं क्लृप्ते नेति । घटाद्भिन्नः पट इति प्रतीतिकाले एव घटपटयोर्भेदाद्भेदानवगमे तं प्रति तयोर्विशेषणविशेष्यभावेन प्रतीत्य-
योगात्तत्स्वरूपमेव तदा तद्भेदधीगोचरत्वेन क्लृप्तमिति स्वरूपस्य भेदधीगोचरत्वकल्पना चान्योन्याभावे तत्कल्पनाधीनेत्यर्थः किञ्चान्यो-
न्याभावमनपेक्ष्यैवात्यन्ताभावप्रतियोगिनि घटादौ स्वरूपमेवाभावप्रतियोगिकाऽभावान्तराभावेन भेदबुद्धिगोचरत्वेन क्लृप्तमितिसर्वभेद-
धीगोचरतया तत्कल्पनोपपत्तिरित्याह।अत्यन्ताभावेति।एवं भेदप्रतियोगिकभेदस्य घटादिस्वरूपत्वमङ्गीकृत्यापिसर्वं तत्स्वरूपस्यैव भेदधीगोच-
रत्वसंभवादन्योन्याभावस्यैव विलोप इत्युक्तंसंप्रतिघटादिस्वरूपत्वंभेदप्रतियोगिकस्यासंभवतीत्याशयेनाह।घटस्यैवेति।भेदस्यायोऽभेदस्तद्विरो-

धिन एव भेदभेदधीगोचरत्वमेव संभव इत्यर्थः तर्हि घटादिभेदाभेदात्यन्ताभावोस्त्वित्याशंक्याह । न च घटादेरिति । भेदसमाना-
धिकरणघटादेर्भेदस्वरूपभूताभेदात्यंताभावत्वानुपपत्तेरित्यर्थः धर्म्यादौ प्रतियोगिकभेदान्तराभावमङ्गीकृत्याप्याह । एवमिति । भेद-
धर्मिणभेदप्रतियोगिकभेदान्तराभावे घटपटप्रतियोगिकभेदयोरपि तदभावात्स्वरूपमात्रस्य चाभेदाविरोधित्वात्सर्वभेदैक्यापत्तौ तस्या
सांकर्याप्रयोजकत्वात्तदभ्युपगमोसुधेत्यर्थः भेदधर्मिणोपि दुर्निरूपत्वाद्भेदे सत्यतादुर्लभेत्याशयेनाह । अपि चेति । घटभेदो यत्र प्रतीयते
स एव तदाश्रय इत्याशंक्याह । प्रतीतेरिति । घटेपि भ्रान्त्यात द्भेदप्रतीतेः परेणापि स्वीकारात्तत्रापि तद्भेदापत्तिरित्यर्थः तर्हि यत्र भेदः

# पेतनतेनैवालं किमन्योन्याभावेन घटस्यैव भेदाभेदविरोधिनएवात्यन्ताभावस्यतद्भेदबुद्धिविषयत्वाच्च नच घटादेस्तदभावत्वंसंभवति एवमपिघटभेदयोर्भेदायोगात्सर्वोभेदएकएवस्यात् अपिचापकुत्रास्तुप्रतीतेःप्रतियोगिन्यपिसत्त्वात् अथयत्रप्रमीयतेतर्हियत्रास्तीत्युक्तंस्यात् क्वास्तीतिप्रश्ने किमुत्तरं

प्रतीयते सधर्मातिशंकते । अथेति । आश्रयानिरूपणे न भेदस्य क्वापि सत्त्वायोगात्तत्प्रतीतिः सर्वाप्यप्रमेति वदंतं प्रति तदाश्रयनिरूपणे-
न तत्प्रतीति प्रमात्वस्य साधनीयत्वात् यत्र प्रतीयते तत्रास्तीत्युक्तेर्यत्रास्ति तत्रास्तीत्यर्थे पर्यवसानात्परस्पराश्रयत्वग्रस्त्योक्त्या न तदाश्र-
यसिद्धिरित्याशयेनाह । तर्हीति । ननु पटादौ घटभेदसंसर्गस्याबाधादेव तत्प्रतीतेः प्रमात्वनिश्चयान्नोक्तदोष इत्याशंक्य तस्य श्रुतियुक्ति-
बाधितत्वादबाधां सिद्ध इत्यभिप्रेत्य परमते घटेपि तद्भेदसंसर्गे बाधस्य वक्तुमशक्यत्वात्तत्रापि तद्भेदापत्तिरित्याह । घटोपीति । तद्भूत-

स्याबाधितत्वमुपपादयति । नहीति ।किं भेदभेदिनोः स्वरूपमेव संसर्गः तदतिरिक्तो वा आद्ये घटतद्भेदयोर्बाधाभावेन तद्रूपसंसर्गस्यापि प्रतीतस्य बाधो न युक्त इत्यर्थः कथं तर्हि नायं घटाद्भिन्न इति बाधशंकार्थाभावात्स एवाप्रमा स्यादित्याह । एवं च सतीति । वैपरीत्यं किं न स्यादित्याशंक्यान्यतरप्रमात्वे नियामकाभावाद्भेदधर्मिनिर्णयो दुर्लभ इत्याह । अविनिगमोवेति । द्वितीयमपवदतिपटोपीति पटे घटभेदस्य तदुभयातिरिक्तसंबन्धोपगमे तस्यापि घटभेदाश्रयतया संबन्धान्तरमिति सबन्धानवस्थापत्तिरतिरिक्तसंबन्धस्य द्रव्याद्यन्यतमत्वायोगेनासंभवश्चे ति भावः ननु पटे तदतिरिक्तसंसर्गाभावेपि पट एव घटभेदसंसर्गः स च घटेनेति तत्र तद्धीरप्रमेति शंकते पटस्वरूप-

घटेपि प्रतीयमानस्य संबंधोऽ बाधितएव नहि घटस्यतस्यवास्वरूपं कश्चिद्बाधते एवंच सतिवाधएवाप्रमाअविनिगमोवास्यात्पटेपि नास्त्यन्यःसंबंधः स्वरूपमितिचेत् तत्किंनकु ड्यादौ ननु तत्राप्यस्तितर्हिभेदप्रमाविषयवैशिष्ट्यस्यानुन्नगतपटादिस्वरूपविशेषत्वे घटेपि तथाज्ञानं तदबाधिनं नहि तत्रपटादिस्वरूपमेवतद्विषयः नचघटातिरिक्तस्वरूपं तत्संसर्गः

मिति । पटस्वरूपस्य घटभेदसंसर्गत्वे कुड्यादौ तदभावात्तत्र घटभेदो न स्यादिति गूढाभिसन्धिं दर्शयति । तत्किमिति । अभिसन्धिमजानतः कुड्यादिस्वरूपमपि तत्र तत्संसर्ग इति शंकते । नन्विति । अभिसन्धिमुद्घाटयति । तर्हीति । तत्तदनन्तस्वरूपस्य घटभेदसंसर्गरूपत्वे घटेपि तत्प्रतीतेरविशेषात्तस्य तद्रूपत्वं केन वारणीयमिति न तद्भेदस्य व्यवस्थिताश्रयसिद्धिरित्यर्थः ननु घटेपि पटादिस्वरूपभू-

स एव भेदसंसर्गः प्रतीयते स कथं तत्र बाधित इत्याशंक्य तत्प्रतीतेः पटाद्याकारत्वाभावान्नैवमित्याह । नहीति । तर्हि घटभिन्नत्वे- नानुगतं पटादिस्वरूपं तत्र घटभेदवैशिष्ट्यमित्याशंक्याह । न च घटेति । किं घटभेदस्तत्संसर्गस्योपलक्षणं विशेषणं वा आद्ये वस्तुमात्र स्य तेनोपलक्षितत्वात् घटेपि तत्संसर्गः स्यादिति प्रागुक्तदोषापत्तिरित्याह । अतिरिक्तस्येति । द्वितीये घटभेदसंसर्गस्य विशेषणीभूतो यो भेदः स किं संसर्गिभेद एव ततोऽन्यो वा नाद्य इत्याह । न स्वयमिति । आत्माश्रयत्वापत्त्या स्वस्य स्वनियामकत्वायोगादित्यर्थः दोषान्तरमाह । घटेपीति । प्रतीतिबलादेव घटस्वरूपस्यापि तद्भेदवत्तया तत्संसर्गरूपत्वस्य दुष्परिहरत्वाद्विशेषणवैयर्थ्यमिति भावः संस- र्गविशेषणीभूतभेदः संसर्गिभेदादन्य इति पक्षे तस्यापि घटभेदत्वात्तत्संसर्गविशेषणतया तन्नियामकः किं स एव भेदः उत प्रथमस्तृतीयो

अतिरिक्तस्योपलक्षणत्वेसएवेदोषःविशेषणत्वेच नस्वयमेवसंसर्गः घटेपि तत्प्रतीतेरव बाधप्रसंगादि त्युक्तम्अन्यश्चेत्तस्यापिनियताधिकरणसंसर्गो नस्वयं उक्तदोषात् नवा प्रथमातिरेकः नियम्यस्य नियामकत्वायोगात् अपरश्चेत्तदेवानुन्नं तत्रच चरमस्य प्रथमस्यकस्यचित्संसर्गाभावे तदधीन

वा आद्ये प्रागुक्तात्माश्रयादिदोषापात इत्याह । अन्यश्चेदिति । द्वितीये परस्पराश्रयत्वापत्तेरुभयोरप्यविनिगमत्वमित्याह । न वेति । तृतीये तस्यापि संसर्गभूतवस्तुविशेषणतयाऽन्यो भेदस्तस्याप्यन्यः कल्पनीय इति प्रागुक्ताप्रामाणिकानन्तघटभेदापात इत्याह । अपरश्चे- दिति । अनन्तभेदपक्षेपि तत् द्वित्वपक्ष इवाविनिगमत्वमपि तुल्यमित्याह । तत्र चेति । पूर्वपूर्वभेद उत्तरोत्तरनियामक इत्याशंक्य स-

वैषामसमाद्दित्वेन समकालीनत्वान्न पूर्वापरभावोपीत्यभिप्रेत्याह । सर्वेषामिति । तद्धेकस्य तदतिरिक्ताः सर्वेसंसर्गरूपा इत्याशंक्य तेषामपि संसर्गे नियामकप्रामाण्याभावात्कस्यापि न नियताश्रयसिद्धिरित्याह । नहीति । एकस्यापि भेदस्य भेदसंसर्गविशेषणतयाननुभवात्तद्रूपानन्तभेदकल्पनमप्रामाणिकत्वादप्ययुक्तमित्याह । नचैवमिति । तदुक्तं खंडनकारैः प्राक्लोपाविनिगम्यत्वप्रमाणापगमेभवेत् अनवस्थिते मा स्यातुरचिकित्स्यात्विदोषतेति घटातिरिक्तो घटभेदाश्रय इति पक्षोक्तं दोषजातं पक्षान्तरेप्यतिदिशति । एतेनेति । तु-

संसर्गाणामन्येषां नसइत्यसंसृष्टाएव सर्व्वैस्फुरतितद्विशिष्टज्ञानंघटइव सर्वत्रभ्रांत्यास्तत्रापि वा प्रमास्यादिति सर्वेषांतुल्यकालत्वात् कोभेदःकस्यसंसर्ग इत्यविनिगमः नहि सर्वः सर्वस्य संसर्गोभवति नियम्यस्य नियामकत्वायोगात् नचैवमनन्तभेदाः केनचिदनुभूयन्ते एतेन घटत्वात्यंताभावस्तद्विशिष्टोवातदधिकरणभेदसंसर्ग इतिनिरस्तम् तुल्यदोषत्वात् किंच तस्यै तस्माद्भेदसंशयव्यतिरेकेनिश्चयदशायां अस्य ततोनभेदनिश्चय इतिसर्वजनसिद्धमितित

ल्यदोषत्वादिति घटत्वात्यन्ताभावाश्रयस्यापि नियतस्यासंप्रतिपन्नत्वात्तदाश्रयः क इति पृष्टो यदि घटभिन्नस्तदाश्रय इति ब्रूयात्तदा परस्पराश्रयापत्तिः घटस्वरूपितस्तदाश्रय इत्युक्तौ चात्माश्रयत्वापत्तिरभावान्तरस्वीकारे च तस्य तस्याश्रयविशेषणं तयान्योन्याभावापेक्षयाऽनवस्थाविनिगमनाद्यापत्तिरित्यर्थः एवं भेदतद्धर्मिप्रतियोगिनां दुर्निरूपत्वं प्रसाध्यभेदज्ञानमपि दुर्घटमित्याह । किंचेति । पूर्वंदृष्टस्य

चैत्रस्य पुरःस्थितान्मैत्राद्भेदसंशये वा भेदव्यतिरेकनिश्चये वा मैत्रस्यापि ततो भेदानिश्चयाच्चैत्रस्य मैत्राद्भेदनिश्चयो मैत्रस्य चैत्राद्भेदनिश्च-
यहेतुर्वाच्यः तत्र तार्किकसंमतन्यायमाह । यत्संशयेति । व्याप्तिसंशयादनुमितिप्रतिबन्धकत्वाद्व्याप्तिनिश्चयस्यानुमिति हेतुत्वं हि प-
रैरुपेयत एवमत्रापि स्वीकार्यमित्यर्थः ततः किं तत्राह । एवमिति । मैत्रस्यापि चैत्राद्भेदसंशयादिदशायां चैत्राद्भेदानिश्चयेन मैत्रस्य
भे० चैत्राद्भेदनिश्चयः चैत्रस्य मैत्राद्भेदनिश्चये हेतुर्वाच्य इत्यन्योन्याश्रयः सर्वत्रोक्तरीत्यास्यादित्यर्थः ननु कुंभस्य कुड्याद्भेदसंशयः कुड्यस्य
धि० कुंभाद्भेदनिश्चयेन प्रतिबन्धकः तस्य ग्राह्यसंशयतया वह्न्यादिसंशयवत्तन्निश्चयप्रतिबन्धकत्वायोगादित्याशंक्य संशयनिश्चयविषयभेदयोः
५८

स्यैतद्भेदनिश्चयोस्य ततोभेदनिश्चयेकारणं यत्संशयव्यतिरेकनिश्चयौ यत्रप्रतिबंधकौ त
न्निश्चयस्य तद्धेतुत्वादेव तस्माद्भेदनिश्चयोप्यस्य ततोभेदनिश्चये हेतुरित्यन्योन्याश्र
यःकिंवानचघटधर्मिकभेदःपरमतेतत्प्रतियोगिकोभवतियेनतस्यग्राह्यतयातत्संशयादिरप्रतिबं

परमते भिन्नत्वान्मैवमित्याह । न च घटेत्यादिना किं च सन्निहितधर्मिकभेदनिश्चयस्य तत्प्रतियोगिकव्यवहितधर्मिकभेदो न विषयः
तज्जनकेन्द्रियसन्निकर्षात्ततस्तत्संशयस्य ग्राह्यसंशयत्वाभावात्तत्प्रतिबन्धकत्वं युक्तमित्याशयेनाह । अयं सनेति । ननु घटधर्मिकभेदसं- ५८
शये तत्प्रतियोगिकभेदानिश्चयो दोषादेव तत्प्रतिबन्धादित्याशंक्य दोषस्यैतत्संशय एवोपक्षीणत्वात्तत्प्रतिबन्धादेवेतरानिश्चयो वक्तव्य इ-
त्याशयेनाह । अयं स न भवतीति । ननु प्रतियोगिनिधर्मिभेदनिश्चये धर्मिणि प्रतियोगिभेदनिश्चयो न हेतुर्येनान्योन्याश्रयः स्यात् किं

तु धर्मितावच्छेदकाभावनिश्चय एव हेतुरित्याशंक्योभयसंशयेपि भेदानिश्चयादविशेषादुभयनिश्चयोपि तद्धेतुर्वाच्य इत्याह । न च प्रतियोगिनीत्यादिना किंच वृक्षद्वयस्याभेदभ्रमदशायां मूलत्वावच्छिन्नैकवृक्षस्य च परस्परभेदधर्मिता एवावच्छेदकमूलत्वाग्रद्वयोरभावस्यान्योन्यस्मिन्निश्चयेपि तयोर्भेदनिश्चयादर्शनान्न धर्मितावच्छेदकाद्यभावे निश्चयो भेदनिश्चयहेतुरित्याह । मूलवृक्ष इति । वृक्षयोर्धर्मितावच्छेदकाद्यभावनिश्चयेपि भेदनिश्चयो न जायते अभेदभ्रमस्य तत्र प्रतिबन्धकत्वादित्याशंक्य तर्हि धर्मिताद्यवच्छेदकाभावनिश्चयस्याप्रयोजक-

धकः स्यात् अयं स न भवतीति ज्ञानस्य विशेष्यतया विशेषणतया वा तद्विषयकत्वायोगा
च्च तस्यैंद्रियासन्निकृष्टत्वात् अयं संभवति नवेति संशयदशायां नियमेनस एतस्माद्भिन्न
इति ज्ञानादर्शनेन प्रतिबंधकत्वानुभवाच्च नच प्रतियोगिनि धर्मितावच्छेदकाभावानिश्चय
एव तद्धेतुरिति वाच्यं विनिगमकाभावात् मूलवृक्षेग्रत्वा भावनिश्चयेप्यग्रवृक्षभेदानिश्चये
नाभेदभ्रमदशायांतास्मिन्सत्यपि तद्दर्शनादभेदनिश्चयस्य तत्प्रतिबंध

त्वात् घटधर्मिकभेदसंशयादेः प्रतिबन्धकत्वमावश्यकमिति तन्निश्चये हेतुर्वाच्य इति परस्पराश्रयोदुष्परिहर इत्याह। अभेदनिश्चयस्येति । किं च प्रतियोगितावच्छेदकोयः भावनिश्चयो भेदनिश्चये हेतुरिति पक्षे पटे पटत्वाभावः प्रथमं ज्ञातव्यः तज्ज्ञानं च तत्प्रतियोगितावच्छेदकघटत्वताज्ञानं विना नेति सा ततोपि प्राक्ज्ञातव्या सा च घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपापटादेर्घटेतरत्वाज्ञाने दुर्ग्रहे-

ति ततो पिप्राग्घटभिन्नतया पटादिर्ज्ञातव्य इति चक्रकापत्तिरित्याशयेनाह तदत्यंतेति किंच भेदप्रतियोगितावच्छेदकस्य तद्ध-
र्मिवृत्तित्वाभावसंशयादिदशायां प्रतियोगिनि धर्मितावच्छेदकाभावानिश्चयाद्धर्मिणि प्रतियोगितावच्छेदकाभावानिश्चयः तेप्रतियोगिनि ध-
र्मितावच्छेदकाभावानिश्चये हेतुर्वाच्यः एवं धर्मिणि प्रतियोगितावच्छेदकाभावनिश्चयेपि प्रतियोगिनि धर्मितावच्छेदकाभावनिश्चयो हे-
तुर्वाच्य इति परस्पराश्रयान्नकोप्यभावः सिद्ध्येदिति कुतस्तदधीनभेदनिर्णय इत्याशयेनाह । प्रतियोगितेति । ननु यत्र यद्धर्मिकभे-

कत्वे च भेदसंशयस्यापि तथात्वाद्भेदज्ञानस्यापि हेतुत्वं तदत्यंताभावज्ञानमपि तदाश्रयभेद
ज्ञानं विना न संभवति घटत्वादेस्तदधीननिरूपणीयत्वात् प्रतियोगितावच्छेदकस्यैतद्
वृत्तित्वाभावात् निश्चयदशायां प्रतियोगिन्येतद्धर्माभावनिश्चयाच्च तत्र मा भूदयं नियमः
अप्रतिबंधदशायां प्रतियोगिन एतद्भेदज्ञानं विनैवास्य तद्भेदज्ञानं भवत्वितिचेन्न एवं सति व्या

दादिनिश्चयस्तत्प्रतियोगिकभेदादिसंशयादिना प्रतिबद्धस्तत्रैव तन्निश्चयो हेतुः स्यान्नतु सर्वभेदनिश्चयेऽयं नियमः ततश्च तादृश प्रतिबं- ६०
धाभावदशायां घटं धर्मिकपटभेदज्ञानं विनैव पटे घटप्रतियोगिकभेदज्ञानसंभवात्कथमन्योन्याश्रयतेति शंकते । ननु माभूदिति । संशया-
दिप्रतिबद्धभेदनिश्चयत्वेन संदिग्धादिगोचरनिश्चयजन्यत्वे गौरवाद्भेदज्ञानमात्रे स हेतुर्वाच्य इति नोक्तदोषपरिहार इति दूषयति । ने-
ति । विपक्षे दंडपात इति एवं सतीति उक्तरीत्याव्याप्तिनिश्चयोपि तत्संशयातिप्रतिबद्धानुमितिं प्रत्येव हेतुः स्यादिति तस्यानुमितिमा-

नहेतुत्वं पराभिमतं न स्यादित्यर्थः किंचयद्गोचरसंशयादि यत्प्रतिबंधकस्तद्गोचरनिश्चयाभावोपि नियामकाभावात्तत्र प्रतिबंधको वा-
च्यः ततश्च तद्धर्मिकाभेदाद्यनिश्चयस्य तत्प्रतियोगिकभेदादिनिश्चयमात्रप्रतिबंधकत्वमिति सर्वत्र निश्चयोहेतुः स्यात् तथाचोक्तपरस्प-
राश्रयत्वं दुर्वारमित्याशयेनाह। प्रतिबंधकेति। किंच स्तंभात्कुंभस्य भेद इति प्रतियोगित्वादि विशिष्टस्तंभादिनिरूप्योभेदःप्रतीयत इति सा-
र्वजनीनं अन्यथा स्तंभादाववधित्वादिविषयपंचम्यादिप्रयोगायोगात् ततश्च भेदज्ञानात्प्राक्स्तंभे तत्प्रतियोगित्वं ज्ञातव्यं तच्च भेदनि-
रूपितमिति ततः प्राक्भेदोज्ञातव्य इति विधान्तरेण परस्पराश्रयमाह । एवमिति । ननु प्रतियोगितावच्छेदकज्ञानमेव भेदज्ञाने कारणं

## भयादिज्ञानस्याप्यनुमित्यहेतुत्वप्रसंगात् प्रतिबंधकसंशयादिस्थले निश्चयाभावस्यापिसत्त्वे न तस्यापि विनिगमकाभावेन प्रतिबंधकत्वात् एवंभेदनिरूपकप्रतियोगित्वादिज्ञानस्यापिभेदज्ञानाधीनतयाऽन्योन्याश्रयः प्रतियोगित्वज्ञाने च विशेषणज्ञानतया कारणं अप्रतियोगित्वांशे ज्ञाना

नप्रतियोगित्वज्ञानमिति नोक्तदोष इत्याशंक्याह । प्रतियोगित्वेति। ननु प्रतियोगितावच्छेदकज्ञानमेव भेदज्ञाने कारणं न प्रतियोगि पर-
मते विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वोपगमात्प्रतियोगित्वस्य च भेदज्ञाने प्रतियोगिविशेषणतया प्रतीतेः तज्ज्ञानमपि तत्कारणं वा-
च्यमित्यर्थः भेदज्ञानात्प्राक् तत्प्रतियोगित्वज्ञानं वक्तव्यमित्यत्र हेत्वन्तरमाह । प्रतियोग्यत्वांश इति । व्यवहितप्रतियोगिकभेदसाक्षा-
त्कारे प्रतीयमानप्रतियोगि तद्विशेषणांशे ज्ञानातिरिक्तेन्द्रियं प्रत्यासत्तितया तज्ज्ञानं प्राग्वक्तव्यमिति परस्पराश्रयान्नभेद इत्यर्थः कथं

तर्हि सर्वेषां भेदप्रतिभास इत्याशंक्य स्वरूपादिप्रतिभासवत्साक्षीमात्रेण मिथ्याभेदप्रतिभासोपपत्तिरित्याह । क्लृप्तेति । प्रतियोगित्वज्ञानस्य भेदधीहेतुत्वेपि कथं परस्पराश्रयत्वमित्याशंक्य सिंहावलोकनन्यायेनोपपादयति । प्रतियोगिन इति । धर्मिणः सकाशात्प्रतियोगिनोभेदाननुभवे तत्प्रतियोगित्वानुभवाभावात्तस्य च भेदनिरूप्यत्वाद्भेदज्ञानं तज्ज्ञाने हेतुरिति परस्पराश्रयत्वमित्यर्थः एवं परमते परस्पराश्रयत्वापत्त्याभेदप्रमां निराकृत्यानवस्थापत्त्यापि तां निराकरोति । अपि चेति । पटो भिन्न इति वा पटस्य भेद इति वा भेदप्रतिभासोधर्मिसंबन्धतयैव भेदमवगाहते तद्धेतुत्वेन च भेदस्य धर्मिणाभेदज्ञानवाच्यं तत्र भेदज्ञानाभावे संबन्धित्वेन ज्ञानाभावरूपं व्य-

तिरिक्तसन्निकर्षा भावादपिपरमतेनतत् कारणंक्लृप्तकारणाभावेतुकार्यंस्वप्नमनोरथादिवन्मायिकमेवप्रतियोगिनोभेदाज्ञानदशायांचतत्रज्ञायतेइतिभेदज्ञानंतत्रकारणं अपिच घटात्पटोभिन्नइत्यत्रमत्वर्थोभातिघटस्यभेदइतिषष्ठ्यर्थः तदुभयभानेचसंबंधिनोर्भेदज्ञानाधीनं त

तिरेकं गमकमाह । तदज्ञानेति । संबन्धिनोर्भेदसत्तैव संबन्धज्ञानेपेक्षिता नतु तज्ज्ञानं गौरवादित्याशंक्याह । नचेति । विंबप्रतिविंबादौभेदसत्ताभावेपि तज्ज्ञानादेव संबन्धधीर्दर्शनात्सदृशयोर्यमजयोः सत्यपि भेदे तज्ज्ञानाभावे संबन्धज्ञानाभावाच्च तज्ज्ञानमेव तद्धेतुर्वक्तव्य इत्यर्थः ननु यमजयोः सादृश्यदोषादभेदभ्रमात्संबन्धज्ञानाभावो न भेदाज्ञानादित्याशंक्य सत्यपि सादृश्ये भेदज्ञानदशायां संबन्धधीदर्शनात्सादृश्यं नाभेदभ्रमद्वारा तत्प्रयोजकं किंतु भेदाज्ञानमेव भ्रमादिकप्रयोजकमिति दोषतयापि तदेव वाच्यमित्याशयेनाह।

तद्ज्ञानेति। एवं भेदस्य धर्मिसंबन्धितयैव ज्ञानात्तद्धेतुतया प्राग्भेदभेदिनोर्भेदो ज्ञातव्य इत्युक्त्वा भेदतद्धर्मिणोः यो विशेषणविशेष्य-
भावेन प्रतीतिनियमात्तदपि तद्धेतुतया तयोर्भेदः प्राक्ज्ञातव्य इत्याह। एवमिति। विशेषणविशेष्ययोर्भेदज्ञानाभावे तद्भावावगमः
किं न स्यादित्याशंक्याह। अन्यथेति। अगृहीतभेदयोर्विशेषणविशेष्यभावज्ञाना।दर्शनात्तयोर्गुणप्रधानभूतयोर्विरुद्धतयैकत्वासंभावितयोर्वि-
शेषणविशेष्यभेदग्रहं विना दुर्ग्रहत्वाच्च तज्ज्ञानं विशेषणभावादिज्ञानहेतुरित्यभ्युपेयमित्यर्थः एवं भेदग्रहे भेदतद्धर्मिभेदग्रहापेक्षामुप-
पाद्य तस्यापि संबन्धित्वादिरूपेणैवधर्मिनिरूप्य भेदे ज्ञानगोचरत्वात् तद्धेतुतया तयोर्भेदज्ञानान्तरं वाच्यमित्यनवस्थापत्त्यानैकमपि भेद-

द्ज्ञानदशायांनियमेनतदप्रतीतेः नचवस्तुसद्भेदसत्तैवापेक्षिता तदभावेपितद्ज्ञानदशायांप्रती
तेः तत्सत्त्वेपितद्ज्ञानदशायांयमजयोस्तदप्रतीतेश्च तद्ज्ञानातिरिक्तदोषाभावादेवं विशेष
णविशेष्यभावज्ञानमपि तदधीनं अन्यथा विरुद्धयोर्भानासंभवात् तथाच भेदज्ञानांतरमपेक्षणी

ज्ञानं सिद्ध्येदित्याह। तथा चेति। ननु घटे पटभेदस्य तद्भेदस्य तद्भेदस्य वा प्रथमं स्वरूपेण निर्विकल्पकगोचरस्य पश्चाद्विशेषणभावादिना
सविकल्पकप्रतिभासोपपत्तिः कुतोनवस्थेत्याशंक्याह। अलंपिष्टपेषणेनेति। तादृशनिर्विकल्पकस्यैवाप्रामाणिकत्वात् परैरप्यभावे निर्वि-
कल्पकगोचरत्वस्य ननु भूतत्वात् धर्म्यादिनिरूप्यस्य तदयोगाच्चेत्तादृशसमाधानं कुशकाशावलंबनतुल्यमिति तन्निराकरणाय न प्रयत्य-
त इति भावः एवं वैधर्म्यादिरूपधर्मभेदं निरस्य प्रकारान्तरसंमतंस्वरू पभेदंनिराकरोति। एतेनेति। स्वरूपभेदपक्षे भेदानवस्थाभावे

प्युक्तरीत्या तज्ज्ञानानवस्थाया दुष्परिहरत्वात्सोपि पक्षो न युक्त इत्यर्थः किं चाद्वैतवादिभिरपि घटादिस्वरूपमात्रस्वीकारात्तत्र भेदप-
रिभाषा न तद्विरोधिनीत्यभिप्रेत्य तद्विरोधिभेदपदार्थमाह । अपि चेति । तर्हि घटादिस्वरूपमेव पटाद्यभेदविरोधितया तद्भेद इत्याशं-
क्याह किं घटाद्यभेदस्तत्स्वरूपमेव तदन्यो वेति विकल्प्य नाद्योभेदादिभावेनाभिमतानां स्वरूपाणां सामानाधिकरण्यादिदर्शनेन वि-
रोधाभावादित्याह । न च घटादीति । न च परस्परानात्मत्वं विरोध इति वाच्यं तथा सति भिन्नस्वरूपं भेद इत्युक्तः स्यात् भिन्नत्वं

यमिति तद्भेदज्ञानाय भेदांतरापेक्षायामनवस्थेत्यलं पिष्टपेषणेन एतेन स्वरूपभेदोपि निरस्तः
भेदस्य विशेषणविशेष्यभावतयैव प्रतीतेस्तत्र चोक्तदोषात् अपि चाभेदविरोधिपदार्थस्यैव भे
दपदात्प्रतीतेः नच घटादिस्वरूपं पटादिमात्रात्मकतदभेदभेदाविरोधितदुभयसामानाधिकर
ण्यधर्मधर्मिभावसत्त्वात् नच परस्यघटपटादीनिरूपितोन्योभेदोस्ति सप्रतियोगिभेदस्यानि

चाद्याप्यसिद्धमित्याश्रयापत्तिरिति भावः द्वितीयं निराकरोति एवं पटाद्यभेदविरोधित्वानिरूपणेन घटादिस्वरूपस्य भेदत्वानुपप-
त्तिमुक्त्वा प्रकारान्तरेण तामाह । सप्रतियोगीति । न च सर्वस्याभावात्मत्वादेकत्र सप्रतियोगित्वादेरविरोध इति वाच्यं तस्यासंप्रतिप-
न्नत्वात् निरपेक्षभावरूपस्यैवाभावत्वे तत्सत्तायां परापेक्षायोगे न स्यादस्ति नास्तीत्याद्यनैकान्तवादापत्तेश्चेति भावः स्वरूपस्यैव भेदत्वे
घटो भिन्न इति शब्दप्रत्यययोः राहोः शिर इतिवद्वैशिष्ट्यरूपालंबनाभावादप्रामाण्यापातवदापन्नश्चेत्यस्मदिष्टसिद्धिरित्याह । घटभेदयोरि

ति । धर्मभूतस्य स्वरूपभूतस्य वा भेदस्यासंभवे कथं तत्र प्रतीतिरित्याशंक्य तां स्वमतेनोपपादयितुं वास्तवभेदवादिमते तदनुपपत्तिमुपसंहरति । तस्मादिति । वास्तवाद्वैतमते घटपटादिनिरूपिताभेदप्रतियोगिकानिर्वचनीयभेदविषयतया तत्प्रतीतिरुपपद्यत इत्याह । सिद्धान्त इति । भेदस्याभेदप्रतियोगित्वे घटादेस्तत्प्रतियोगित्वेन प्रतीतिः कथमित्याशंक्यपदद्वयसामानाधिकरण्यार्थाभेदस्यैवनञर्थभेदप्रतियोगिकत्वानुभवात्तन्निरूपकतयातत्रघटादिप्रतीतिरन्यथासिद्धेत्याशयेनाभेदाभावएवभेदप्रतीतेर्विषयइत्युपपादयति तथाहीत्यादिना

## ष्प्रतियोग्यस्वरूपत्वानुपपत्तेः घटभेदयोधर्मधर्मिभावानुपपत्तेश्चतस्मात्परपक्षेभेदप्रतीतिर्निर्विषयैव सिद्धांतेतु कथंचित्साविषया तथाहिं इदमिदं नेतिप्रतीतिस्तयोरेवेदमितिप्रतीतिपदार्थद्वयनिरूपिता भेदाभावं विषयीकरोति नञर्थस्य तत्संबंधिप्रतियोग्यकत्वात् संभवति च तद्दुभयाभेदः अस्तिहि घटपटादौ सदिदमिति अनुवृत्तसत्स्वरूपानुभवः स च घटाद्यधिष्ठानमा

नञ्संबन्धीति । नञ्संबन्धिबत्पदद्वयसामानाधिकरण्यं तदर्थप्रतियोग्यत्वादित्यर्थः घटपटाभेदस्यैव तुच्छत्वात्तत्प्रतियोगिकभेदोपि तथैवेति कथं तत्प्रतीतिः सविषयेत्याशंक्याह । संभवतीति । तर्हि भेदाभेदमतादभेदापात इत्याशंक्य घटाद्यधिष्ठानसद्रूपाद्वितीयात्मचैतन्यस्यैव प्रपंचे सद्बुद्धिगोचरवास्तवस्वरूपत्वेन श्रुतिन्यायसिद्धत्वात्तदतिरेकेण द्वयस्य स्वतः सत्ताभावाच्च तदेव सर्वाभेद इत्यभ्युपगमान्मतांतरप्रवेश इत्याशयेन घटाद्यनुस्यूतमेकंसद्वस्तूपपादयति । अस्ति हीति । सर्वंचानुगतसद्बिद्बुगोचरसद्व्यतिरेकत्वे भिन्नस्यघटादेस्तद्रूपत्वा-

योगात् तद्विलक्षणस्य तस्य रजतादिवत्सविकल्पितत्वं सिद्धं नैवमात्मनः कल्पितत्वं शक्यं वक्तुं आत्मन्येव सर्वस्य बाधकश्रवणे तस्यैव सर्वाधिष्ठानसद्रूपत्वावधारणात्तस्य दृश्यते सत्यत्वायोगादात्मैव सच्चिद्रूपोभ्युपेय इत्याह । सच्चेति । सदाकारानुगतबुद्धेर्गवादिबुद्धिवज्जातिविषयत्वसंभवातसद्व्यक्तौ्रक्या।सिद्धिरित्याशंक्याह । नचेति । गवादिव्यक्तीनां प्रत्यक्षादिना भेदस्य निश्चितत्वात्तदेकव्यक्तेः सत्यत्वावधारकागमाभावाच्च तत्रानुगतधीनिर्वाहाय व्यक्त्यतिरिक्तजातिकल्पनायुक्ता प्रकृते च सदेव सौम्येदमग्रआसीदेकमेवाद्वितीयमित्यादिनात्मातिरिक्तसद्व्यक्तिनिषेधाद्वाचारंभणादिश्रुत्या विकारानृतत्वाभिधानाच्च सर्वत्राधिष्ठानसदात्मानुगमादेव सद्बुद्ध्युपपत्तौ सदात्मन एव

त्मैवेदं सर्वमितिश्रुतिसिद्धात्मस्वरूपंचैतन्यंनच सत्तासद्बुद्धाविषयोनात्मेतिवाच्यंसदेव सौम्येदमग्रआसीदितिश्रुत्याऽसंभावितबाधतया च चैतन्यरूपमद्व्यतिरिक्तसत्तायां प्रमाणाभा

प्रपंचमात्रानुगतसत्तात्मत्वात्तदतिरिक्तसत्ताजातिर्द्रव्यादित्रितयमात्रवृत्तिर्न कल्पनीया प्रमाणप्रयोजनयोरभावादित्याह । सदेवेत्यादिना ननु सदात्मैव प्रपंचसत्तात्मेति कथं सच्छब्दप्रातिपदिकार्थस्य तस्य भावार्थे विहिततल्प्रत्ययांतसत्ताशब्दार्थत्वायोगादित्याशंक्यैतदात्म्यमित्यादौ भावार्थप्रत्ययस्य भवितर्यपि प्रयोगदर्शनान्न काचिदप्यनुपपत्तिरित्याह । न चेत्यादिना प्रातिपदिकार्थस्याप्यन्यानुगततया भावप्रत्ययान्तशब्दत्वमविरुद्धं इतरथा परमतेपि प्रमेयसत्पदार्थयोः प्रमेयत्वसत्वयोः प्रमेयत्वसत्त्वशब्दार्थत्वं न स्यादित्याशयेनाह । अन्यथेति । आत्मस्वरूपस्यैव सत्तारूपत्वेन तस्य सच्छब्दार्थत्वं न स्यात् सत्त्वविशिष्टस्यैव तदर्थत्वादित्याशंक्य पराभिमतसत्ताया अपि

तदर्थत्वोपगमान्मैवमित्याह । अत एवेति । सत्त्वमपि सत्ताविशिष्टत्वात्सत्तेति वदंतं प्रत्याह । सत्त्वस्येति । सत्त्वस्यासत्त्वे तद्वैशिष्ट्यस्य क्वाप्यसंभवात्सर्वमसदेव स्यादिति भावः सदात्मचैतन्यमेवाधिष्ठानतयानुगतसत्ता न तदतिरिक्तेत्येतत्सुरेश्वराचार्यैरप्युक्तमित्याह । तदुक्तमिति । एवं चिदात्मन एव सद्रूपत्वमुपपाद्य तत्स्वरूपमेवाधिष्ठानतया घटाद्यनुगतं सत् घट इत्यादौ घटाद्यात्मतया भासमानं घटा-

वात्तस्य च घटाद्युपादानतयाश्रुतिसिद्धत्वेन घटाद्यनुगततयातस्य तत्र सद्विषयत्वोपपत्तेः नच भावार्थः सत्ता कथं प्रकृत्यर्थः स्यादिति वाच्यं स्वार्थेऽपि प्रत्ययोपपत्तेः अन्यथापरमते प्रमेयत्वं प्रमेयंन स्यातसत्त्वस्यापिसदात्मत्वं न स्यात् अतएवसत्त्वाविशिष्टमेवसदितिपरा
64 स्तंसत्त्वस्यसद्भेदसत्त्वाऽनुपपत्तेश्चतदुक्तंवार्तिकेप्रकृत्यर्थातिरेकेणप्रत्ययार्थोनविद्यते सत्तेत्यत्रततः स्वार्थस्तद्धितोत्रभवन्भवेदिति तदेव च घटादिस्वरूपं सदन्यस्य सदित्यप्रतीयमानस्वरूपत्वायोगात् स्वरूपमेवचाभेदः एवं च प्रपंचमात्रस्यात्मैव स्वरूपाभेदः एवं च घटप

देपारमार्थिकस्वरूपमिति निगमयति । तदेव चेति । आत्मन एव सद्रूपेण घटादिस्वरूपत्वे साधनफलमाह । स्वरूपमेव चेति । परैरपि तत्स्वरूपमेव तदभेद इति स्वीकाराद्घटादिवास्तवस्वरूपात्मैव तदभेद इत्यर्थः एवं घटपटादिभेदस्तदधिष्ठानसदात्मैवेत्येतदन्यत्रा-

ध्यतिदिशति एवं सर्वत्र भेदप्रतियोगीति वक्तुं । एवं प्रपंचेति । एवं सर्वत्रापि भेदप्रतियोगिनं वास्तवमभेदं प्रदर्श्य तत्प्रतियोग्यकाभा
व एवेदमिदं नेति प्रतीत्यालंबनमित्याह । एवं चेत्यादिना घटादेर्भेदप्रतियोग्यभेदनिरूपकत्वात्तत्प्रतियोगिकोटौ प्रतिभासो न प्रतियो-
भे० गित्वेनेत्याशयेन घटपटादिनिरूपितेत्युक्तं पराभिमतान्योन्याभावं व्यावर्तयितुमत्यन्ताभाव इत्युक्तं तस्य वास्तवाभेदप्रतियोगिकस्य वास्त-
धि० वत्वासंभवादनिर्वचनीयत्वमाह । अविद्ययेति । स च पराभिमतधर्मप्रतियोगिनोरेक एवेत्याह । घटपटाश्रित इति । तद्भेदप्रतियो-
६४ गिककल्पितभेदप्रतिभासे स्वमतेनोदाहरणमाह । जीवेश्वरयोरिति । भेदस्योभयाश्रितत्वे घटात्पटो भिन्न इति कथमेकस्य तदवधित्वेन

टादिनिरूपिताभेदात्यंताभावोऽविद्ययाक्लृप्तोघटपटाद्याश्रितोघटः पटो न भवतीति प्रती
यते जीवेश्वरयोरिव विंबप्रतिविंबमुखयोरिव वा सएव घटात्पटोभिन्नइत्यपिप्रतीयते उभया
श्रितविभाग इवेदमस्माद्विभक्तमिति एवं सति यत्संशयव्यतिरेकनिश्चय इत्यादिदोषो

प्रतिभास इत्याशंक्य विभागस्योभयाश्रितत्वेप्येकस्य तदवधित्वेन प्रतिभासवत्तदुपपत्तिरित्याह । स एवेति । धर्मिप्रतियोगिनोर्भेदस्यैकत्वं
तद्धर्मिकभेदनिश्चये तत्प्रतियोगिकभेदसंशयः परमत इव न प्रतिबन्धकः तदुभयभेदस्यैकत्वेन तत्संशयस्य ग्राह्यसंशयत्वात् ततश्च यत्संश- ६४
यव्यतिरेकेत्यादिन्यायानवतारान्नाच प्रतिपच्चोक्तान्योन्याश्रयादि दोषोपीत्याह । एवं सतीति । ननु भेदप्रतियोगिनो घटपटादिर्भेदस्य
भेदप्रतीतेः प्राक्प्रत्यक्षादिनाप्रतीत्ययोगात्कथं प्रतियोगिग्रहाधीनो भेदग्रहस्तवापि घटत इत्याशंक्याह । भेदस्येति । तर्हि साक्षिणो नित्य-

त्वात्सदाभेदः प्रतिभासितेत्याशंक्याह । धर्मिप्रतियोगीति । यथाकाशः साक्षिमात्रभास्योपि स्वावच्छेदकालोकाद्याकारचाक्षुषवृत्तौ सत्यामेव तदधिव्यक्तसाक्षिणा भास्यते नान्यदा एवं प्रमाणेन भेदप्रतियोग्यभेदनिरूपकघटपटाद्यसाधारणस्वरूपोपस्थितावेवभेदः साक्षिभास्य इति न सर्वदा तत्प्रतिभासो नवा शुक्तिरजतयोर्भेदप्रतिभासप्रसंगः इति भावः प्रतियोगिज्ञानं भेदज्ञाने न हेतुः तज्ज्ञानदशायामेव च भेदो भातीत्यत्र गमकमाह । अत एवेति । धवखदिरपलाशा इत्यादिरूपस्य गृहीतविवेकानेकविशेष्यकैकज्ञानस्य च समूहालंबनत्वात्प्रतियोगिग्रहस्य विवेकग्रहहेतुत्वे तदनुपपत्तेः प्रतियोग्यादिना सहैव भेदग्रहो वाच्य इति भावः एवं सजातीयविजातीयस्वग-

पिनावतरति ग्राह्यसंशयातिरिक्तभेदसंशयाद्यभावात् भेदश्चास्माकं साक्षिभास्य इति न तत्र प्रतियोगित्वादिज्ञानापेक्षधर्मिप्रतियोगिस्वरूप्यत्वाच्च नातिप्रसंगः धर्म्यादौ प्रमाणस्यापेक्षितत्वात् अतएव समूहालंभने भेदोपिभेदिभिः सहैवाभासते तस्मात्तत्त्वमसीत्यादेःसत्यज्ञान

नभेदानां स्वरूपप्रमाणधर्मिप्रतियोग्याद्यनिरूपणेन वास्तवत्वायोगात्तत्प्रतीतिराविद्यकानिर्वचनीयभेदगोचरेति प्रतिपादनफलमाह । तस्मादिति । जीवब्रह्मणोर्वस्तुतः सत्यज्ञानसुखात्मतयाश्रुतिस्मृत्यन्यायसिद्धत्वात्तद्विरुद्धरूपस्य भेदस्योक्तविधयामिथ्यात्वाच्च तदैक्यं तत्त्वमस्यादिवाक्यप्रतिपाद्यमिति ब्रह्मविदां गतमनवद्यमित्यर्थः विपुलमतीनां युक्तिशूराणां श्रुतिमन्तरेणाप्यद्वैतं सुबोधमित्याशयेनोक्तविधयाभेदप्रतिभास एव तत्प्रतियोग्यतयाद्वैतवस्तुसाधयतीत्याह । आस्तामिति । सर्ववस्तुनः सर्वस्य नामरूपात्मकप्रपंचस्य वास्तवं यत्स्वरूपं

तस्याभेदे एकत्वे विषयेऽन्यस्य श्रुत्यादेः प्रमाणत्वमास्तां तिष्ठतु तत्परामर्शयत्नो न कार्यं इति य।वत् भेदप्रमाणं तत्प्रतिभास एवायं सार्वजनीनो विचार्यमाणोऽलमत्यर्थं अद्वैतं साधयति भेदप्रतियोगिनोऽन्यस्यानिरूपणात्तद्द्वयं वस्त्वेव तत्प्रतियोगिवाच्यमित्यर्थः एवं द्वैतापवादेनाद्वैतब्रह्म-निरूपणं निपुणाचार्यपरंपरागतमस्माभिरप्यनन्यथासिद्धयुक्तिभिरुपपादितं पुरुषार्थार्थिभिरापातदृष्ट्या नोपेक्षणीयं किन्तु यत्नतो गुणदोषौ विचार्यं श्रुत्यनुगुणमिदमिव वैदिकैरादरणीयमित्याह । गुरुचरणेति । गुरूणां चरणपरिचरणमहिम्नैव सकृच्छ्रवणादिनैव हृद्यन्तःकरणे गतं साक्षात्कृतं शिष्यानुकंपया निर्गतं ग्रन्थरचनया वहिःप्रकाशितं यत्तत्त्वं तद्विगुणं पुरुषार्थानुपयोगि तदनुगुणं वेति वीक्षिताविचारयतु कः

सुखात्मकं जीवो ब्रह्मेति संसिद्धमागमांतविदां मतम्।११।आस्तामन्यप्रमाणत्वमभेदे सर्ववस्तुनः भेद
प्रमाणमेवैतदद्वैतं साधयत्यलम्।१२ गुरुचरणसकाशाद्धृद्गतं निर्गतं तद्विगुणमनुगुणं वा वीक्ष्य तां
तत्क्षमात्मा अपि विसृजति कश्चित्का च माला वमत्या शतमखमणिमाला शारदाकाशकल्पाम्॥१३।

क्षमात्मा तद्विचारे क्षमः समर्थं आत्मांतःकरणं यस्य स विचारे सत्यत्र किंचिदपि वैगुण्यं नेति भावः अत्र विचाररहितानामनपेक्षामात्रेण वैगुण्यं न संभावनीयमित्यत्र दृष्टान्तमाह। अपीति । स्वच्छामिन्द्रनीलमणिमालां कश्चिदविचार्य काचमणिमालाभ्रांत्यात्यजत्यपि न तावता सा प्राज्ञै-रुपेक्ष्यत इत्यर्थः॥वेदान्तवृन्दविपिने विततं विशुद्धमद्वैतमार्गमपवर्गपदाधिरोहम्।श्रीमद्गुरूक्तनयमुक्तसमस्तशंकमास्थाय यान्तु पदमुत्तमम-स्तदोषाः ॥१॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नृसिंहाश्रमश्रीमच्चरणनिरतनारायणाश्रमविरचितोभेदधिक्कारः समाप्तः ॥ 

तिमिरनाशकप्रेस बनारस ॥

